# अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति । विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाऽऽचरणस्य विकासोऽद्यत्वे आवश्यको दृश्यते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तःक्रियायाश्च निष्कर्षेण निर्मितं २०७८ तमस्य वैक्रमाब्दस्य पाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते । शिक्षा विद्यार्थिषु वर्तमानस्य ज्ञानपक्षस्यान्वेषणं विधाय शिक्षणशिल्पेन जीवनस्य सम्बन्धं स्थापयति । शिक्षया विद्यार्थिषु स्वाधिकारस्य, स्वतन्त्रतायाः, समानतायाश्च प्रवर्धनाय, स्वस्थजीवनस्याभ्यासाय, तार्किकविश्लेषणेन निर्णयाय, वैज्ञानिकविश्लेषणेन व्यक्ति-समाज-राष्ट्राणां सबलविकासाय चाग्रेसरणशीलं सामर्थ्यं विकसनीयम् । एवं व्यक्तेः नैतिकाचरणप्रदर्शनाय, सामाजिकसद्भावप्रवर्धनाय, पर्यावरणस्य समुचितप्रयोगशिक्षणाय, दृढशान्तौ प्रतिबद्धतायै च शिक्षायाः आवश्यकता समाजे अवलोक्यते । तेन समाजसापेक्षतया ज्ञान-शिल्प-सूचना-सञ्चार-प्रविधीनां प्रयोगसमर्थाः, स्वावलम्बिनः, व्यावसायिकशिल्पाभ्यासनिरताः, राष्ट्रं राष्ट्रियतां राष्ट्रियादर्शं च प्रति सम्मानविधायकाः, समाज-स्वीकार्याः, सदाचरणशीलाः, स्वसंस्कृति-संस्कारपालनपराः, परसंस्कृत्यादिषु सहिष्णवश्च नागरिकाः शिक्षया निर्मातव्याः । एवं कल्पनाशीलानां रचनाशिल्पिनाम्, नैरन्तरिकपरिश्रमेणोद्यमशीलानाम्, विचारे उदात्तानाम्, व्यवहारे आदर्शमयानाम्, सामयिकसमस्यानां व्यवस्थापने साफल्याधायकानाम्, स्वावलम्बिनाम्, देशभक्तानाम्, परिवर्तनोद्यतानाम्, चिन्तनशीलानाम्, समावेशिसमाजनिर्माणे योगदानं करिष्यमाणानां च नागरिकाणां निर्माणं शिक्षया विधातव्यमिति समाजस्यापेक्षा दृश्यते । इमानेव पक्षान् विचार्य 'राष्ट्रिय-पाठ्यक्रम-प्रारूप, २०७६' इत्यनुसारेण निर्मितस्य कर्मकाण्डविषयकपाठ्यक्रमस्याधारेण नवम्याः कक्षायाः पाठ्यपुस्तकमिदं विकसितं वर्तते ।

सर्वप्रथमं डा. ऋषिराम-पोखरेलः, केशवः अधिकारी, शम्भुप्रसाद-दाहालः, हरि-गौतमप्रभृतीनां महानुभावानां कार्यदलेन लिखितमिदं पुस्तकं डा. रुद्रप्रसादः मिश्र, शिवप्रसादः घिमिरे, अशोकः पौडेल, पुरुषोत्तमः घिमिरे- प्रभृतीनां महानुभावानां कार्यदलेन परिमार्जितं सम्पादितञ्चास्ति । अस्य पाठ्यपुस्तकस्य विकासे पाठ्यक्रमसिद्धान्तसंरचनयोः नवीनतमधारणामनुसृत्य परम्परागतानां

शिल्पानामनुसरणं कृतमस्ति । अस्मिन् कार्ये अस्य केन्द्रस्य महानिर्देशकः अणप्रसादः न्यौपाने, डा. ऋषिरामः रेग्मी, डा. पुरुषोत्तमः भट्टराई, मनोजः घिमिरे, टुकराजः अधिकारी-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते । अस्य चित्राङ्कनं टङ्कणं रूपसज्जा चेत्यादिकं सन्तोषकुमारः दाहाल इत्याख्येन महानुभावेन कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः शिक्षकाः, जिज्ञासवश्छात्राः, सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति । अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरयुतं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुस्तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति । अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः
**शिक्षाविज्ञानप्रविधिमन्त्रालयः**
पाठ्यक्रमविकासकेन्द्रम्

# विषयसूची

प्रथमः पाठः

# अथ श्रावणीस्नानम्

श्रावणीस्नानमुपाकर्म च कदा भवतीति जिज्ञासायाम्–

“श्रावण्यां पौर्णमास्यां श्रवणयुक्तायां श्रवणरहितायां श्रावणस्य शुक्लपञ्चम्यां हस्तयुक्तायामयुक्तायां वा उपाकर्म (अध्यायोपाकर्म) भवति।”

“ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां पञ्चमी हस्तेन वा इति वचनात्।”

–पारस्करगृह्यसूत्रम्

## अथ प्रयोगः

ॐ श्रीपरमात्मने नमः

श्रावणीस्नाने आवश्यकान्युपकरणानि

कुशाः, तिलाः, यवाः, मृत्तिका, गोमयम्, भस्म, अपामार्गः, सुमनसः, दूर्वादीनि।

तत्र सशिष्यो गुरूर्नद्यादौ तडागे वा गत्वा शुचौ देशे आवश्यकान्युपकरणानि संस्थाप्य हस्तौ पादौ प्रक्षाल्य बद्धशिखी यज्ञोपवीत्याचम्य प्रवाहाभिमुखः प्राङ्मुखो वा कुशोपग्रहः सङ्कल्पं कुर्यात्।

### (क) सङ्कल्पः

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ अद्य श्रीमद्भगवतो महापुराणपुरुषोत्तमस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगत्सृष्टिकारिणो ब्रह्मणो द्वितीये परार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नोर्द्वितीययामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायम्भुवादिमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्णां युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गतैकदेशे नेपालदेशे पाशुपतक्षेत्रे वा (अमुक) पुण्यभूमौ बौद्धावतारे षष्टिसंवत्सराणां मध्येऽमुकनाम्नि संवत्सरे दक्षिणगोलावलम्बिनि श्रीमार्तण्डमण्डले अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे यथाराशिस्थिते श्रीसूर्ये यथाराशिस्थिते चन्द्रमसि यथा राशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं स्थानस्थितेषु सत्सु एवं सकलग्रहगणविशेषेणविशिष्टायां शुभपुण्यतिथौ (अमुक) गोत्रोत्पन्नः (अमुक) प्रवरः (अमुक) वेदान्तर्गत (अमुक) शाखाध्यायी (अमुक) शर्माहं स्वात्मनः श्रुतिस्मृतिपुराणागमोक्तफलप्राप्तये इह जन्मनि जन्मान्तरे वा कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पर्शास्पर्शासनशयनभोजनगमनानृतभाषणादिजनित-दुरितनिरसनपूर्वकमधीतानाम् अध्येष्यमाणानां चाध्यायानां स्थान-विच्छेदक्रोशघोषणदन्तविवृत्तिदुर्वृत्त-द्रुतोच्चारितवर्णानां पूर्वसवर्णानां गलोपलम्बितविवृत्तोच्चारितवर्णानां श्लिष्टास्पष्टवर्णविघट्टनादिभिः

पठितानाञ्च श्रुतीनां यद्यातयामत्वं तत्परिहारार्थम् अष्टत्रिंशदनध्यायाध्ययने रथ्यासञ्चरतः शूद्रस्य श्रृण्वतोऽध्ययने म्लेच्छान्त्यजातेः श्रृण्वतोऽध्ययनेऽशुचिदेशेऽध्ययने आत्मनोऽशुचित्वेऽध्ययनेऽक्षरस्वरानुस्वार-पदच्छेदकण्डिकाव्यञ्जनह्रस्वदीर्घप्लुतकण्ठतालुमूर्धन्योष्ठ्यदन्त्यनासिकानुनासिक-रेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्त-स्वरितादीनां व्यत्ययेनोच्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्य वेदस्य सवीर्यत्वसम्पादनद्वारा यथावत्फलप्राप्तिपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं देवब्राह्मणसवितृसूर्यनारायणसन्निधौ (अमुकतीर्थे) प्रवाहाभिमुखः स्नानमहं करिष्ये ।

॥ इति सङ्कल्प्य तीर्थं प्रार्थयेत् ॥

## (ख) तीर्थप्रार्थना

**ॐ नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् ।**
**भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥**
**पापिनामुद्धृतिकृते समुद्भूतासि भूतले ।**
**दह मे सर्वपापानि मां पुनीहि सुरेश्वरि ॥**
**त्वमेव गतिरस्माकं पततां नरकार्णवे ।**
**समुद्धर महादेव जटाजूटनिवासिनि ॥**
**या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् ।**
**सा गतिः सर्वजन्तूनां गौतमीतीरवासिनाम् ॥**
**पुष्करादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।**
**आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥**
**त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ।**
**याचितं देहि तीर्थं मे तीर्थराज नमोऽस्तु ते ॥**
**अपामधिपतिस्त्वं च तीर्थेषु वसतिस्तव ।**
**वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रयच्छ मे ॥**
**अधिष्ठात्र्यश्च तीर्थानां तीर्थेषु विचरन्ति याः ।**
**देवतास्ताः प्रयच्छन्तु स्नानाज्ञां मम सर्वदा ॥**
**गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥**
**चन्द्रभागे महाभागे शरणागतवत्सले ।**
**गण्डकी सरयूयुक्ता समासाद्य पुनीहि माम् ॥**

**सर्वाणि यानि तीर्थानि पापमोचनहेतवः ।**

**आयान्तु स्नानकालेऽस्मिन् क्षणं कुर्वन्तु सन्निधिम् ॥**

इति संप्रार्थ्य तत उरुᳯहीति न्युब्जाञ्जलिहस्तेन तोयमभिमन्त्रयेत् ।

## (ग) जलाभिमन्त्रणम्

**ॐ उरुᳯहि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाऽउ ।**

**अपदे पादाप्रतिधातवेकरुतापवक्ता हृदयाविधश्चित् । नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥**

ततो ये ते शतमिति जलमावर्तयेत् ।

## (घ) जलावर्तनम्

**ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।**

**तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः ।**

ततः सुमित्रिया न इत्यपोऽञ्जलिनाऽऽदाय-

## (ङ) जलमादानं निषिञ्चनञ्च

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु** । इति ।

"दुर्मित्रिया इति द्वेष्यं प्रति निषिञ्चेत्" (कामादीन् शत्रूनुद्दिश्य तीर्थतटे स्ववामभागे निषिञ्चेत्) ।

**ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यञ्च वयं द्विष्मः** । इति ।

कटिं वस्त्यूरु जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदेदं विष्णुरिति ।

## (च) मृत्तिकालेपनम्

मृल्लेपनप्रकारो यथा

मृत्स्नामादाय तस्या भागत्रयं कृत्वा प्रथमभागं वामहस्तेनादाय नाभेरधः कटिप्रदेशमनुलिप्य हस्तं प्रक्षाल्य द्वितीयभागमादाय वामहस्तेन प्रागवस्तिमूरुः जङ्घे चरणौ करौ च त्रिस्त्रिरनुलिप्य हस्तं प्रक्षाल्याचम्य तीर्थोदकं साञ्जलिः शिरसा प्रणमेत् । पुनस्तथैव तृतीयभागं वामहस्ते निधाय दक्षिणहस्तेन नाभेरुपरि ललाटमारभ्य नाभिपर्यन्तं लेपयेत् । सर्वत्र लेपने 'इदं विष्णुरिति' मन्त्रावृत्तिः ।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।**

**समूढमस्यपाᳯसुरे स्वाहा ॥**

**ॐ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।**

**मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥**

**उद्धृतासि वराहेण कृष्णेन शतबाहुना ।**

**नमस्ते सर्वभूतानां प्रभवारणि सुव्रते ॥**

**मृत्तिके ब्रह्मभूतासि कश्यपेनाभिवन्दिता ।**

**त्वया हतेषु पापेषु गच्छेयं परमां गतिम् ॥**

ततः नाभिपरिमाणं तीर्थजलान्तः प्रविश्य सूर्याभिमुखो निमज्जेदापोऽअस्मानिति ।

## (छ) स्नानम्

**ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**

**विश्वꣳहि रिप्रम्प्रवहन्ति देवीः ॥**

स्नात्वोदिदाभ्य इत्युन्मज्जेत् ।

**ॐ उदिदाभ्यः शुचिरापूतऽएमि** ॥ इत्युन्मज्ज्य पुनस्तूष्णीं त्रिवारं निमज्ज्योन्मज्ज्याचम्य गोमयेन विलिम्पेन्मानस्तोक इति ।

## (ज) गोमयलेपनम्

तत्प्रकारो यथा–

पाणिभ्यां गोमयमादाय सूर्यं दर्शयित्वा भागत्रयं कृत्वा प्रथमभागं वामहस्तेनादाय नाभेरधस्ताल्लेपयेत् । पुनर्हस्तौ प्रक्षाल्य द्वितीयभागं पूर्ववद्वामहस्तेन ऊरुः वस्ति जङ्घे पादौ करौ च लेपयेत् । पुनर्हस्तौ प्रक्षाल्य दक्षिणेन पाणिना तृतीयं भागमादाय नाभेरूर्ध्वं ललाटमारभ्य नाभिपर्यन्तं लेपयेत् ।

**ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ।**

**मा नो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।**

**ॐ अग्रमग्रं चरन्तीनामोषधीनां वने वने ।**

**तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥**

**यन्मे रोगं च शोकं च तन्मे दहतु गोमयम्** ॥ इति ।

## (झ) पुनः स्नानम्

पुनः पूर्ववदापोऽअस्मानिति प्रागुक्तौ मन्त्रौ पठन् त्रिवारं निमज्ज्य स्नायात् ।

ततः सजलं भस्माऽऽदाय दक्षिणेन पाणिना ललाटादिनाभ्यन्तं शरीरं लेपयेत् ।

## (ञ) भस्मलेपनम्

"ॐ अग्निरिति भस्म, ॐ प्रसद्य भस्म" इति द्वौ मन्त्रौ पठेत् ।

**ॐ अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थलमिति भस्म, व्योमेति भस्म । सर्वꣳह वा इदं भस्म । मन एतानि चक्षूंषि भस्मानि ॥**

**ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।**

**सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः** ॥ इति ।

"ततोऽभिषिञ्चेदिमं मे वरुणेति चतसृभिर्मापि उदुत्तमं मुञ्चन्त्ववभृथेति अन्ते चैतत्"

यथा कुशोन्नीतेन प्रतिमन्त्रं नाभेरुर्ध्वं दक्षिणपार्श्वमारभ्य शिरो नीत्वा नाभेर्वामपार्श्वान्तं सिञ्चेत् ।

## (ट) कुशोदकेन सेचनम्

मन्त्राश्च

**ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥**

**ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानोहविर्भिः ।**

**अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽआयुः प्रमोषीः ॥**

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ।**

**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥**

**ॐ स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ।**

**अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि ॥**

**ॐ मापो मौषधीर्हिꣳसीर्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च ।**

**यदाहुरघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥**

**ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय ।**

**अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥**

**ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।**

**अथो यमस्य पड्वीशात्सर्वस्माद्देव किल्विषात् ।**

**ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।**

**अव देवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥**

इत्यभिषिच्य– "निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेत् । आपो हिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यामपो देवा द्रुपदादिव शन्नोदेवीरपाꣳरसमपोदेवीः पुनन्तु मेति नवभिः कुशोन्नीतेन जलेनात्मानमभिषिञ्चेत्" ।

त्रिभिर्दर्भैर्दक्षिणकरधृतैः सोदकैर्नाभिमारभ्य प्रदक्षिणं नाभिपर्यन्तं वक्ष्यमाणैः प्रणवादिभिर्गायत्रीपूर्वैरापो हिष्ठेत्यादिभिर्मन्त्रैरात्मानं पावयेत् ।

आदौ गायत्र्याभिषिच्य -

**ॐ आपो हिष्ठा मयो भुवस्तानऽऊर्जे दधातन । महे रणाय चक्षसे ॥**

**ॐ योवः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः ॥**

ॐ तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

ॐ इदमापः प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्रोहानृतँयच्च शेपेऽअभीरुणम् ।

आपो मा तस्म्मादेनसः पवमानश्च मुञ्चतु ॥

ॐ हविष्मतीरिमाऽआपोहविष्माँ२आविवासति । हविष्मान्देवोऽअध्वरो हविष्माँऽअस्तु सूर्यः ॥

ॐ देवीरापोऽअपान्नपाद्यो वऽऊर्म्मिर्हविष्यइन्द्रियावान्मदिन्तमः ।

तन्देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भागस्थ स्वाहा ॥

ॐ कार्षिरसि समुद्रस्य त्वा क्षित्त्याऽउन्नयामि ।

समापोऽअद्भिरग्मत समोषधीभिरोषधीः ॥

ॐ अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः ।

याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥

ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।

पूतं पवित्रेणे वाज्यमापः शुन्धन्तु मैनसः ॥

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।

शं योरभिस्रवन्तु नः ॥

ॐ अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम् । अपाꣳरसस्य यो रसस्तँव्वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥

ॐ अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाब्भ्यः ।

तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥

ॐ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा । पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥

ॐ अग्नऽआयूꣳषि पवसऽआसुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ॥

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।

पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥

ॐ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँ॥रनु ॥

ॐ यत्ते पवित्रमर्च्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥

ॐ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥

ॐ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ।

ॐ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ॥

तया मदन्तः सधमादेषु वयꣳस्याम पतयो रयीणाम् ॥

पश्चात्तूष्णीमाचम्य "चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते च । इमम्मे इत्यष्टौ"–

**ॐ चित्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥**

**ॐ वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥**

**ॐ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥**

**ॐ पुनातु ।**

**ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥**

**ॐ भूः पुनातु ।**

**ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेडमानो वरुणेह बोध्युरुशꣳसमा नऽआयुः प्रमोषीः ॥**

**ॐ भुवः पुनातु ।**

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः ।**

**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥**

**ॐ स्वः पुनातु ।**

**ॐ सत्वन्नोऽअग्ने ववोभवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ।**

**अव यक्ष्वनो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि ।**

**ॐ महः पुनातु ।**

**ॐ मापो मौषधीर्हिꣳसीर्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च ।**

**यदाहुरघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च ।**

**ॐ जनः पुनातु ।**

**ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय ।**

**अथावयमादित्य व्रते तवानागसोऽअदितये स्याम ।**

**ॐ सत्यं पुनातु ।**

**ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।**

**अवदेवैर्देवकृतमेनोयासिषमव मत्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥**

**ॐ ऊर्ध्वं पुनातु ।**

**ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ॐ सर्वं पुनातु ।**

## (ठ) अपामार्गेण मार्जनम्

ततः कुशान् जले निक्षिप्य स्नायात् । पुनरपामार्गमादाय दक्षिणपाणिना वक्ष्यमाणमन्त्रं पठन् नाभेरूर्ध्वं नाभेर्दक्षिणपार्श्वमारभ्य शिरसि नीत्वा वामपार्श्वान्तं मार्जयेत् ।

**ॐ अपाघमप किल्बिषमप कृत्यामपो रपः ।**

**अपामार्ग त्वमस्मदपदुः ष्वप्न्यꣳसुव ॥**

ततः परं स्नायात् ।

## (ड) दूर्वाङ्कुरेण सेचनम्

अथ दूर्वाङ्कुरेण नाभेरूर्ध्वं वक्ष्यमाणमन्त्रेणात्मानं सिञ्चेत् ।

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।**

**एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

ततो दूर्वाङ्कुरानपि विमुच्य स्नायात् ।

## (ढ) अथाघमर्षणं पापपुरुषनिरसनं वा

"अन्तर्जलेऽघमर्षणं त्रिरावर्तयेद्द्रुपदादिवायङ्गौरिति वा ऋचं प्राणायामं वा सशिरसमोमिति वा विष्णोर्वा स्मरणम्" ।

**ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ।**

**ततो रात्र्यजायत ततः समुद्रोऽअर्णवः ॥**

**समुद्रादर्णवादधि संवत्सरोऽअजायत ।**

**अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥**

**सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ।**

**दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः** । इति त्रिः ।

**ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ।**

**पितरञ्च प्रयन्त्स्वः** ॥ इति त्रिवारं वा ।

**ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।**

**पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः** ॥ इति त्रिवारं वा ।

**ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्**

**ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**

**धियो यो नः प्रचोदयात् ॥**

**ॐ आपो ज्योति रसोऽमृतम् । ब्रह्म भूर्भुवः स्वरोम्** ॥ इति त्रिवारं वा ।

### (ण) ध्यानम्

**ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं ।**

**विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ॥**

**लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं ।**

**वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥**

इति वा त्रिवारं मेघवर्णं शेषशायिनं लक्ष्म्या सेव्यमानं विष्णुं स्मरन् पठेत् । एवं स्नानं कृत्वा स्नानाङ्गतर्पणं कुर्यात् ।

### (त) स्नानाङ्गतर्पणम्, तत्रादौ देवतर्पणम्

तत्रादौ ऋजुकुशोपग्रहं सचन्दनाक्षततुलसीपत्रं जलमर्घ्यपात्रेण अञ्जलिना देवतीर्थेनैकैकवारं देवान् तर्पयेत्–

**ॐ ब्रह्मादयो देवास्तृप्यन्ताम् ।**

**ॐ भूर्देवास्तृप्यन्ताम् ।**

**ॐ भुवर्देवास्तृप्यन्ताम् ।**

**ॐ स्वर्देवास्तृप्यन्ताम् ।**

**ॐ भूर्भुवः स्वर्देवास्तृप्यन्ताम् ।**

अथ निवीती (कण्ठलम्बी) सन् कुशानुदग्रान् कृत्वाऽऽचम्य चोदङ्मुखो भूत्वा कायतीर्थेन प्रतिमन्त्रं सयवजलेन द्विर्द्विर्ऋषींस्तर्पयेत् ।

### (थ) ऋषितर्पणम्

**ॐ सनकादिद्वैपायनान्ता ऋषयस्तृप्यन्ताम् ।**

**ॐ भूर्ऋषयस्तृप्यन्ताम् ।**

**ॐ भुवर्ऋषयस्तृप्यन्ताम् ।**

**ॐ स्वर्ऋषयस्तृप्यन्ताम् ।**

**ॐ भूर्भुवः स्वर्ऋषयस्तृप्यन्ताम् ।**

ततः पितृतीर्थेन प्रतिमन्त्रं त्रिस्त्रिवारं दक्षिणामुखः प्राचीनावीती भूत्वा दक्षिणाग्रमूलान् कुशान् कृत्वा सतिलजलेन पितॄन् तर्पयेत् ।

### (द) पितृतर्पणम्

**ॐ कव्यवाडनलादयः पितरस्तृप्यन्ताम् ।**

**ॐ भूः पितरस्तृप्यन्ताम् ।**

**ॐ भुवः पितरस्तृप्यन्ताम् ।**

**ॐ स्वः पितरस्तृप्यन्ताम् ।**

**ॐ भूर्भुवः स्वः पितरस्तृप्यन्ताम् ।**

ततः सव्यः सन् आचामेत् ।

अथ सतिलजलाञ्जलिमादाय -

### (ध) तिलोदकोत्सर्जनम् (यक्ष्मतर्पणम्)

**ॐ यन्मया दूषितं तोयं शारीरमलसम्भवैः ।**

**तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥** इति तीर्थतटे उत्सृजेत् ।

### (न) शिखोदकोत्सर्जनम्

**ॐ लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः ।**

**ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥**

इति वृक्षादौ दक्षिणभागे शिखां निष्पीडयेत् ।

### (प) सूर्योपस्थानम्

सूर्यमुदीक्षनुपस्थानं कुर्यात् ।

**ॐ अदृश्रमस्य केतवो विरश्मयो जनाँ२ऽअनु । भ्राजन्तो अग्नयो यथा ।**

**उपयामगृहीतोसि सूर्यायत्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ।**

**सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेस्वसि भ्राजिष्ठोहम्मनुष्येषु भूयासम् ॥**

**ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**

**नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥**

**ॐ उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम् ।**

**देवन्देवत्रा सूर्यमगन्मज्योतिरुत्तमम् ॥**

**ॐ उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः ।**

**दृशे विश्वाय सूर्य्यम् ॥**

**ॐ चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ।**

**आ प्प्रा द्यावापृथिवीऽअन्तरिक्षꣳसूर्यऽआत्मा जगतस्तस्थुषश्च ॥**

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्क्रमुच्चरत् ।**

**पश्येम शरदः शतञ्जीवेम शरदः शतꣳश्रृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥**

ॐ विभ्राड्बृहत् ... आकृष्णेनेत्यन्तं सप्तदशमन्त्राँश्च पठेत् ।

**नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।**

**त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥**

इत्युपस्थाय नमस्कृत्य च धौते वाससी परिधाय भस्मादि धारणं कृत्वा गायत्रीं जपेत् । ततो नारायणं स्मरन् गृहमाव्रजेत् ।

॥ **इति श्रावणीस्नानप्रयोगः** ॥

## शब्दार्थाः

कुशोपग्रहः = कुश हातमा लिएर

प्रक्षाल्य = पखालेर, धोएर

ऋजुः = सरल, सोझो

व्यत्ययः = विपरीत

आगमः = शास्त्र

उत्सर्जनम् = छोड्नु, त्याग्नु

कायतीर्थम् = कान्छी औँलाको फेद

उपवीती = सव्य भएर वा देब्रे काँधमा जनै राखेर

निवीती = जनैलाई घाँटीमा माला जस्तै गरी गलाएर

प्राचीनावीती = अपसव्य भएर वा जनै दाहिने काँधमा राखेर

मृत्तिका = माटो

गोमयम् = गोबर

भस्म = खरानी, विभूत

लेपनम् = लगाउनु

आवर्तनम् = घुमाउनु

अभिमन्त्रणम् = मन्त्रणा गर्नु

सिञ्चनम् = सेचन गर्नु

मार्जनम् = मार्जन गर्नु वा जलले सेचन गर्नु

अघमर्षणम् = पाप पखाल्नु वा अहङ्कार रूपी पापपुरुषलाई हटाउनु

जङ्घा = पिडौँला

जानु = घुँडा

ऊरुः = तिघ्रा, जाँघ

वस्तिः = मूत्राशय वा नाभिदेखि तल इन्द्रियदेखि माथिको स्थान, मूत्राधार

निक्षिप्य = फ्याँकेर

आदाय = लिएर

कुर्यात् = गरोस्

भूत्वा = भएर

उदङ्मुखः = उत्तरतर्फ फर्केर

अर्घ्यपात्रेण = अर्घ्यपात्र वा अर्घौतोले

खड्गपात्रेण = खगौतोले

अञ्जलिना = अन्जुलीले

कृत्वा = गरेर

पितृतीर्थेन = चोरऔँला र बुढीऔँलाको बिचभागबाट

देवतीर्थेन = हात सिधा पारेर वा माँझीऔँला र साहिँली औँलाको टुप्पोतिरबाट

तर्पयेत् = तर्पण गरोस्

शिखा = टुप्पी

निष्पीडयेत् = निचोरोस्, फट्कारोस्

सूर्योपस्थानम् = सूर्यको प्रार्थना

लतागुल्मेषु = लहराघारीमा

वृक्षेषु = रुखमा

व्यवस्थिता = रहेका वा बसेका

पितरः = पितृहरू

मया = मैले

उत्सृष्टैः = छोडेका

शिखोदकैः = शिखाका जलले

तृप्तिम् = तृप्ति, पूर्णता

आयान्तु = प्राप्त गरून्

कटि = कम्मर

चरणौ = दुई गोडा

करौ = दुई हात

उदकम् = पानी

नाभेः = नाभिको

अधः = तल

अनुलिप्य = लेपन गरेर

उपरि = माथि

## अभ्यासार्थाः प्रश्नाः

**१. जलाभिमन्त्रणमृत्तिकालेपनमन्त्रयोः प्रतीकमात्रं लेख्यम् ?**

**२. भस्मलेपनमन्त्रौ लिखत ।**

**३. अपाघमप, ऋतञ्चमेति मन्त्रौ कुत्र विनियुज्येते ?**

**४. केन तीर्थेन कतिवारं देवतर्पणं क्रियते ?**

**५. शिखानिष्पीडनमन्त्रः कः ?**

**६. सूर्योपस्थानमन्त्राणां प्रतीकानि देयानि ।**

**७. अघमर्षणविधिं यथाग्रन्थं प्रतिपादयत ।**

**८. श्रावणीस्नाने आवश्यकानि वस्तूनि कानि ?**

**९. उपाकर्म कदा क्रियते ? ग्रन्थाधारेण लिखत ।**

**१०. मृत्तिकालेपनप्रकारो लेखनीयः ।**

**११. गोमयलेपनं केन विधिना सम्पाद्यते ?**

**१४. अधो लिखितेषूपयुक्तेषु (√) एतद् चिह्नेन चिह्नयत ।**

*श्रावणीस्नानं कदा भवति ?*

(क) श्रावण्यां पौर्णमास्याम्, श्रावणस्य शुक्लपञ्चम्याम् ।

(ख) भाद्रकृष्णाष्टम्याम्

(ग) दूर्वाष्टम्याम्

(घ) कार्तिकपूर्णिमायाम्

(ङ) कोजाग्रतपूर्णिमायाम् ।

(च) वसन्तपञ्चम्याम् ।

द्वितीयः पाठः

# यज्ञोपवीतनिर्माणम्

## (क) यज्ञोपवीतपरिचयः

यज्ञोपवीतमिति शब्दो यज्ञ + उपवीत इति द्वौ शब्दौ सम्मेल्य निर्मितः समस्तशब्दो वर्तते। अस्यार्थस्तु–

**"यज्ञो वै विष्णुः"** (शतपथ १।१।१।२)

**"यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः।**
**उपवीतं ततोऽस्येदं तस्माद् यज्ञोपवीतकम्॥**

*(स्मृतिसारसङ्ग्रहः)*

यज्ञार्थम् उपवीतम्। उपवीतमिति परिधानप्रकारः। यज्ञेन संस्कृतम् उपवीतम्। इत्यादयोऽर्थाः भवन्ति। अत एव आधुनिकैः सभ्यकथितैः पुरुषैः शोभार्थं धारितमेतत् इति मत्वा यज्ञार्थसमय एव यज्ञोपवीतधारणम्। येन केनापि यदा कदा च गठितं सूत्रं यज्ञोपवीतं न भवति।

यतो हि-

**"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥"**

– श्रीमद्भगवद्गीता १६।२३

**"सदोपवीतिना भाव्यं सदा बद्धशिखेन च।"**

*॥ इति स्मृतिवचनाच्च ॥*

अस्यापरनाम ब्रह्मसूत्रम्, सावित्रीसूत्रञ्च।

यतः

**"सूचनाद् ब्रह्मतत्त्वस्य वेदतत्त्वस्य सूचनात्।**
**तत्सूत्रमुपवीतत्त्वाद् ब्रह्मसूत्रमिति स्मृतम्॥"**

*(स्मृतिप्रकाशे)*

## (ख) यज्ञोपवीतनिर्माणप्रकारम्

तच्च कार्पासम्। तन्निर्माणप्रकारः

ब्राह्मणेन ब्राह्मणस्त्रीभिर्विधवादिभिश्च निर्मितं सूत्रं ग्राह्यम्। संहतश्चतुरङ्गुलिमूलेषु षण्णवत्या सूत्रमावेष्ट्य तत्त्रिगुणीकृत्य ऊर्ध्ववृत्तं वलितं कृत्वा पुनरधोवृत्तरीत्या त्रिगुणीकृतं तत्सूत्रं नवतन्तुकं संपद्यते। तत्त्रिरावेष्ट्य दृढग्रन्थिं कुर्यात्। ग्रन्थिसम्पादनमन्त्रो यथा

**ॐ प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः ।**

**तेनान्नेना प्यायस्व नमो रुद्राय विष्णवे मृत्योर्मे पाहि** ॥ इति ।

सिद्धे मन्त्राः प्रयोक्तव्या इति न्यायेन एवं सिद्धं यज्ञोपवीतं कलशाद्युपरि **"ॐ भूर्भुवः स्वरोम्"** इति संस्थाप्य **ॐ यज्ञोपवीतं प्रतिष्ठापयामीति** वदेत् । **एतन्त** इति प्रतिष्ठाप्य

**ॐ कारदैवत्याय प्रथमतन्तवे नमः ।**

**ॐ अग्निदैवत्याय द्वितीयतन्तवे नमः ।**

**ॐ नागदैवत्याय तृतीयतन्तवे नमः । ॐ सोमदैवत्याय चतुर्थतन्तवे नमः ।**

**ॐ पितृदैवत्याय पञ्चमतन्तवे नमः । ॐ प्रजापतिदैवत्याय षष्ठतन्तवे नमः ।**

**ॐ वायुदैवत्याय सप्तमतन्तवे नमः । ॐ सूर्य दैवत्यायाष्टमतन्तवे नमः ।**

**ॐ सर्वदैवत्याय नवमतन्तवे नमः ।**

इति तन्तुदेवताः सम्पूज्य ग्रन्थित्रयाधिपान् हरिब्रह्मेश्वरान् सम्पूजयेत् ।

**ॐ हरये नमः । ॐ ब्रह्मणे नमः । ॐ ईश्वराय नमः ।**

**ॐ यज्ञोपवीताकारस्याधिपाय परब्रह्मणे नमः ।**

इति च सम्पूज्य तदादाय ॐ आकृष्णेनेतिमन्त्रेण आदित्याय प्रदर्शयेत् । पुनः कलशोपरि संस्थाप्य अष्टोत्तरशतकृत्वः प्रणवं सकृद्गायत्रीं च जपन् पृशेत् । ततः प्राणानायम्य त्र्यम्बकमन्त्रं जपन् दक्षिणहस्तेन स्पृशेत् । ततो दशकृत्वः सावित्र्याभिमन्त्रिताभिरद्भिः सिञ्चेत् । एवं संस्कृतं यज्ञोपवीतं धारयेत् ।

*॥ इति पारस्करसूत्रम् ॥*

### अन्यच्च यज्ञोपवीतनिर्माणम्

"अथातो यज्ञोपवीतनिर्माणप्रकारं वक्ष्यामः । ग्रामाद्बहिस्तीर्थे गोष्ठे वा गत्वाऽनध्यायवर्जिते पूर्वाह्ने कृतसन्ध्य अष्टोत्तरशतं सहस्रं वा यथाशक्ति गायत्रीं जपित्वा ब्राह्मणेन तत्कन्यया सुभगया धर्मचारिण्या वा कृतं सूत्रमादाय भूरिति प्रथमां षण्णवतीं मिनोति । भुवरिति द्वितीयां स्वरिति तृतीयां परिमाय पृथक् पलाशपत्रे संस्थाप्य आपोहिष्ठेति तिसृभिः शन्नोदेवीरित्यनेन सावित्र्याचाभिषिच्य वामहस्ते कृत्वा त्रिः संताड्य व्याहृतिभिस्त्रिवलितं कृत्वा पुनस्ताभिस्त्रिगुणितं कृत्वा पुनस्त्रिवृतं कृत्वा प्रणवेन ग्रन्थिङ्कृत्वोङ्कारमग्निं नागान् यमपितृन् प्रजापतिं वायुं सूर्यं विश्वान् देवान् नवतन्तुषु क्रमेण विन्यस्य संपूजयेत् । देवस्येत्युपवीतमादाय उद्वयंतमसस्परीत्यादित्याय दर्शयित्वा यज्ञोपवीतमित्यनेन धारयेदित्याह भगवान्कात्यायनः ॥"

*॥ कात्यायनपरिशिष्टः ॥*

**"चतुर्वेदेषु गायत्री चतुर्विंशतिकाक्षरी ।**

**तस्माच्चतुर्गुणं कृत्वा ब्रह्मतन्तुमुदीरयेत् ॥"**

शिष्टस्मृतिः

**"तिथिर्वारश्च नक्षत्रं तत्त्ववेदगुणान्वितम् ।**

**कालत्रयं च मासाश्च ब्रह्मसूत्रं हि षण्णवम् ॥"** (सामवेदः छान्दोग्यपरिशिष्टः)

यथा–

(तिथिः १५)+(वारः ७)+(नक्षत्रम् २७)+(तत्त्वम् २५)+(वेदः ४)+(गुणः ३)+(कालः ३)+ (मासः १२) = ९६ ।

अन्ये देवलादयो स्मृतिकारा अपि कात्यायनमतं स्वीकुर्वन्ति ।

## (ग) यज्ञोपवीतस्य स्थूलसूक्ष्मादिविषये च

**पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।**

**तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥**

**सिद्धार्थफलमानेन धार्यं स्यादुपवीतकम् ।**

**यशोहरमतिस्थूलमतिसूक्ष्मं धनापहम् ॥**

*॥ इति धर्मशास्त्रीयाः ॥*

अन्यच्च स्मृत्यर्थसारे

**त्रिवृदूर्ध्वं वृतं कार्यं तन्तुत्रयमधोमुखम् ।**

**त्रिवृत्तं चोपवीतं स्यात् तस्यैको ग्रन्थिरिष्यते ॥**

**कार्पासक्षौमगोबालशणवल्कतृणादिकम् ।**

**सदा संभवतो धार्यमुपवीतं द्विजादिभिः ॥**

**शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके ।**

**आवेष्टच षण्णवत्या तत् त्रिगुणीकृत्य यत्नतः ॥**

**अब्लिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं च तत् ।**

**अप्रदक्षिणमावृत्तं सावित्र्या त्रिगुणीकृतम् ॥**

**अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् ।**

**त्रिरावेष्ट्य दृढं बद्धवा हरिब्रह्मेश्वरान् नमन् ॥**

**विच्छिन्नं वाप्यधोप्यान्तं भुक्त्वा निर्मितमुत्सृजेत् ।**

**स्तनादूर्ध्वमधो नाभेर्न धार्यं तत्कथञ्चन ॥**

**ब्रह्मसूत्रेऽत्र सव्येंऽशे स्थिते यज्ञोपवीतिता ।**

**प्राचीनावीतीता सव्ये कण्ठसंस्थे निवीतिता ॥**

*॥ इति ॥*

**सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।**

**विशिखो व्युपवीतश्च यत्करोति न तत् कृतम् ॥**

(कात्यायनः)

## (घ) यज्ञोपवीतसङ्ख्या

**यज्ञोपवीतं द्वे धार्ये एकं नैव च धारयेत् ।**

**तृतीयं चोत्तरीयं स्याद्वस्त्राभावे चतुर्थकम् ॥**

(अ) **ब्रह्मचारिण एकः स्यात् स्नातकस्य द्वे बहूनि वा ॥** (आश्वलायनगृह्यसूत्रम् ।)

(आ) **यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।**

**तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ॥** (हेमाद्रिः)

## (ङ) यज्ञोपवीतस्यावश्यकत्वम्

**विना यज्ञोपवीतेन तोयं यः पिबते द्विजः ।**

**उपवासेन चैकेन पञ्चगव्येन शुद्धयति ॥**

## (च) यज्ञोपवीतपरिवर्तनकालाः

**उपाकर्मणि चोत्सर्गे गते मासचतुष्टये ।**

**नवयज्ञोपवीतानि धृत्वा पूर्वाणि सन्त्यजेत् ॥**

अन्यच्च –

**सूतके मृतके चैव गते मासचतुष्टये ।**

**नवयज्ञोपवीतानि धृत्वा जीर्णानि सन्त्यजेत् ॥**

**जीर्णयज्ञोपवीतानि शिरोमार्गेण सन्त्यजेत् ।**

अथवा शिरोमार्गेण निःसार्य दक्षिणहस्तात् सन्त्यजेत् । यथा धारितं तद्वदिति ।

## शब्दार्थाः

| | | |
|---|---|---|
| मिनोति | = | सङ्कलन गर्दछ वा बटुल्दछ |
| षण्णवतिः | = | छयानब्वे, ९६ |
| आवेष्ट्य | = | बेरेर |
| अब्लिङ्गकैः | = | वरुणदेवता सम्बन्धी |
| उपाकर्म | = | पुनर्वेदाध्ययन काल, छोडिएका वेदको फेरि अध्ययन गर्ने कर्म |
| उत्सर्जनम् | = | वेदाध्ययनपरित्याग वा वेदाध्ययनबाट विश्राम |
| यज्ञोपवीतम् | = | जनै वा यज्ञको अधिकार प्राप्त गराउने संस्कार गरिएको सूत्र |

| | | |
|---|---|---|
| दशकृत्वः | = | दश पटक |
| सावित्र्याभिः | = | सावित्रीहरुद्वारा |
| अद्भिः | = | पानीले |
| मन्त्रिताभिः | = | मन्त्रिएका |
| सिञ्चेत् | = | सेचन गरोस् |
| प्रणवम् | = | ॐ कार, ओम् |
| सकृत् | = | एक पटक |
| गायत्रीं च | = | गायत्री मन्त्र पनि |
| जपन् | = | जप्दै |
| स्पृशेत् | = | छोओस् |

## अभ्यासार्थाः प्रश्नाः

**१. कथं निर्मीयते यज्ञोपवीतम् ? इति सुस्पष्टं वर्णयत ।**

**२. यज्ञोपवीतशब्दः किमर्थं प्रकटयति ?**

**३. यज्ञोपवीतपरिवर्तनकालः कः ? कथं परिवर्तनीयम् ?**

**४. यज्ञोपवीततन्तौ पूजनीयाः देवाः के ?**

**५. पारस्करसूत्रानुसारं यज्ञोपवीतनिर्माणविधिं वर्णयत ।**

**६. कात्यायनपरिशिष्टे उल्लिखितं यज्ञोपवीतनिर्माणप्रकारं प्रतिपादयत ।**

**७. यज्ञोपवीतस्य स्थूलसूक्ष्मादिविषये धर्मशास्त्रीयाः किं कथयन्ति ? लिखत ।**

**८. यज्ञोपवीतसङ्ख्याविषयकं शास्त्रीयं मतं किम् ?**

**९. किमर्थं यज्ञोपवीतं धारणीयम् ?**

**१०. एतन्ते देवसवितः, मनोजूतिरिति मन्त्रौ पूरणीयौ ।**

**११. उपयुक्तेषु (√) एतच्चिह्नमनुपयुक्तेषु च (×) एतच्चिह्नं देयम् ।**

(अ) यज्ञोपवीतं कदा परिवर्तनीयम् ?

(क) उपाकर्मणि, उत्सर्गे च । (ख) जन्मसूतके, मृतसूतके ।

(ग) मासचतुष्टये गते । (घ) उपरि लिखितं सर्वम् ।

(आ) श्रौते स्मार्ते च कर्मणि कति यज्ञोपवीतं धार्यम् ?

(क) एकम् (ख) द्वे (ग) त्रीणि (घ) बहूनि

तृतीयः पाठः

# यज्ञोपवीताभिमन्त्रणम्

**अथ कर्म्मोपयोगिसप्तधान्यादिकारिकासङ्ग्रहः**

सप्तधान्यानि

**यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च ।**
**श्यामाकं चणकं चैव सप्तधान्यमुदाहृतम् ॥**

सर्वौषधयः

**मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।**
**शठी चम्पकमुस्तं च सर्वौषधिगणः स्मृतः ॥**

अन्यच्च

**कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।**
**वचाकर्पूरमुस्ता च सर्वौषध्यः प्रकीर्तिताः ॥**

सप्तमृदः

**गजाश्वरथ्यवल्मीकसङ्गमाद् गोकुलात् ह्रदात् ।**
**राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥**

पञ्चपल्लवाः

**अश्वत्थोदुम्बरप्लक्षा न्यग्रोधश्चूत एव च ।**
**पञ्चकं पल्लवानां स्यात्सर्वकर्मसु शोभनम् ॥**

पञ्चत्वचः– **एतेषामेव त्वचः ।**

पञ्चरत्नानि– **सुवर्णं रजतं मुक्ता लाजावर्त्तः प्रबालकम् ।**

अन्यदपि

**कनकं कुलिशं मुक्ता लाजावर्त्तः प्रबालकम् ।**
**एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ।**
**अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ॥**

दशाङ्गधूपः

**षड्भागकुष्ठो द्विगुणो गुडश्च लाक्षात्रयं पञ्चनखस्य भागाः ।**
**हरीतकी सर्जरसश्च मांसी भागैकमेकं त्रिलवं शिलाजम् ॥**
**घनस्य चत्वारि पुरस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैः ।**

कङ्कणौषधयः

**दूर्वा यवाङ्कुराश्चैव बालकं चूतपल्लवम् ॥**

**हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः ।**

**कङ्कणौषधयश्चैताः कौतुकाख्या नव स्मृताः ॥**

मधुरत्रयम्

**आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते ।**

## (क) मङ्गलाचरणं स्वस्तिवाचनञ्च

श्रीगणेशाय नमः । श्रीमङ्गलमूर्तये नमः । श्रीगुरुभ्यो नमः । श्री सरस्वत्यै नमः ।

वेदाय नमः । वेदपुरुषाय नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः ।

ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः ।

एतत्कर्म प्रधानदेवताभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः ।

नारायणाय नमः । अविघ्नमस्तु ।

**ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।**

**लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥**

**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।**

**द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥**

**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।**

**संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥**

**शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।**

**प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥**

**अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।**

**सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥**

यजुर्वेदीयस्वस्तिवाचनमन्त्राः

**आनो भद्राः क्रतवो यन्तु विश्वतो दब्धासोऽअपरीतासऽउद्भिदः ।**

**देवानो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १ ॥**

**देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳरातिरभिनो निवर्तताम् ।**

**देवानाꣳसख्यमुपसेदिमा वयं देवा नऽआयुः प्रतिरन्तु जीवसे ॥ २ ॥**

**तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।**

**अर्यमणं वरुणꣳसोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥**

**तन्नो वातो मयोभुवातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।**

**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना श्रृणुतं धिष्ण्यायुवम् ॥ ४ ॥**

**तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।**

**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥**

**स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।**

**स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥**

**पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः ।**

**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसा गमन्निह ॥७ ॥**

**भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**

**स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ८ ॥**

**शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।**

**पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥**

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।**

**विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥**

**द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ।**

**वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ११ ॥**

**यतो यतः समीहसे ततो नोऽअभयं कुरु ।**

**शं नः कुरु प्रजाभ्योभयन्नः पशुभ्यः ॥ १२ ॥**

सुशान्तिर्भवतु ॥

## (ख) सङ्कल्पः

ततो कर्ता आचम्य प्राणानायम्य कर्मपात्रं कुर्यात् । तद्यथा-

यद्देवा देवहेडनमिति कण्डिकात्रयेण देवानावाह्य पवित्रं गन्धादिकं च स्वस्वमन्त्रेण क्षिप्त्वा कर्मपात्रं कुर्यात् । तत्र मन्त्राः

**ॐ यद्देवा देव हेडनन्देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ।**

**ॐ यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् ।**

**वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ।**

**ॐ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमा वयम् ।**

**सूर्यो मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥** इति कण्डिकात्रयेण देवानावाह्य–

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥** इति मन्त्रेण पवित्रं क्षिपेत् ।

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥** इति जलम् ।

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।**

**प्रत्नमद्भिः पृक्तः स्वधया पितृँल्लोकान् प्रिणाहि नः स्वाहा ॥** इति तिलान् ।

**ॐ श्रीश्च ते लक्ष्मीश्च पत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**

**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥** इति पुष्पम् ।

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥** इति चन्दनम् ।

**ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत ।**

**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥** इत्यक्षतान् ।

कुशतिलजलान्यादाय देशकालौ सङ्कीर्त्य अद्य अध्यायोत्सर्गकर्माङ्गत्वेन यथामिलितोपचारैः दीपकलशगणेशपूजनपूर्वकं यज्ञोपवीताभिमन्त्रणं रुद्राभिषेकं सप्तर्षिस्थापनपूजनं रक्षाबन्धनपूजनं यज्ञोपवीततन्तुदेवतापूजनं ऋषितर्पणं वंशानां ब्रुवणं ऋषिश्राद्धं स्वपितृभ्यो यज्ञोपवीतदानं ब्राह्मणेभ्यो यज्ञोपवीतदानं नवीनयज्ञोपवीतधारणं जीर्णयज्ञोपवीतत्यागः रक्षासूत्रबन्धनं च अहं करिष्ये । इति सङ्कल्पं कुर्यात् ।

ततो दीपकलशगणेशादीनां पूजा विधेया ।

## (ग) अथ दीपपूजा

तत्र स्थिरोभवेति दीपं प्रज्वालयेत् ।

**ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् ।**

**पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ॥**

पृष्टोदिवीति पूजनम् ।

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश ।**

**वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥**

इति पाद्यादिभिरुपचारैः सम्पूजयेत् । ततः प्रार्थना-

**ॐ शुभं भवतु कल्याणमारोग्यं सुखसम्पदः ।**

**आत्मज्योतिप्रकाशाय दीपज्योतिर्नमोऽस्तु ते ॥** इति ।

## (घ) अथ कलशपूजा

तत्र वेद्या ईशानदिग्भागे अव्रणं दध्यक्षतादिभूषितं कलशं धान्योपरि स्थापयित्वा पूजयेत् ।

तत्प्रकारश्च यथा

भूरसीति भूमिशोधनं कुर्यात् ।

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।**

**पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥**

धान्यमसीति धान्यं स्थापयेत् ।

**ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानायत्वा व्यानाय त्वा ।**

**दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोसि ॥**

आजिघ्रकलशमिति धान्योपरि अव्रणं कलशं स्थापयेत् ।

**ॐ आजिघ्र कलशं महचा त्वा विशन्त्विन्दवः ।**

**पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥**

वरुणस्योत्तम्भनमसीति कलशे तीर्थादिजलं प्रक्षिपेत् ।

**ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥**

या ओषधीरिति कलशे सर्वौषधीः प्रक्षिपेत् ।

**ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।**

**मनैनु बभ्रूणामहꣳशतं धामानि सप्त च ॥**

हिरण्यगर्भ इति कलशे पञ्चरत्नानि प्रक्षिपेत् ।

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।**

**स दाधार पृथिवीं द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥**

याः फलिनीरिति कलशे पूगीफलादीनि प्रक्षिपेत् ।

**ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।**

**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥**

ओषधय इति कलशे यवान् प्रक्षिपेत् ।

**ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ।**

**यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि ॥**

गन्धद्वारामिति कलशे चन्दनं प्रक्षिपेत् ।

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

काण्डात्काण्डादिति दूर्वा प्रक्षिपेत् ।

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।**

**एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

स्योना पृथिवीति सप्तमृदः प्रक्षिपेत् ।

**ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ।**

**यच्छा नः शर्म सप्रथाः ॥**

अश्वत्थेव इति पञ्चपल्लवैस्तन्मुखमाच्छाद्य-

**ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।**

**गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥**

बृहस्पतेऽअतीति वस्त्रयुग्मेन कलशं वेष्टयेत् ।

**ॐ बृहस्पतेऽअति यदर्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु ।**

**यद्दिदयच्छवसऽऋत प्रजात तदस्मासु द्रविणन्धेहि चित्रम् ।**

**उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ॥**

अम्बेऽअम्बिके इति आम्रपल्लवैस्तन्मुखमाच्छाद्य-

**ॐ अम्बेऽअम्बिकेम्बालिके न मा नयति कश्चन ।**

**ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥**

तत्त्वा यामीति कलशे वरुणमावाह्य पूजयेत् ।

**ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽआयुः प्रमोषीः ॥**

ततः कलशे गङ्गादितीर्थान्यावाहयेत् ।

**ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।**

**आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**

कलशं स्पृष्ट्वाभिमन्त्रयेत् ।

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।**

**मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥**

**कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।**

**ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥**

**अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥**

ततः कलशप्रार्थना

**ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।**

**उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥**

**त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।**

**त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥**

**शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।**

**आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥**

**त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।**

**त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥**

**सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।**

*॥ इति ॥*

## (ङ) अथ गणेशपूजा

हस्ते कुशयवजलान्यादाय– ॐ अद्येहेत्यादि (अमुक) कर्म निर्विघ्नपरिसमाप्त्यर्थममुककर्माङ्गतया गणेशपूजनमहं करिष्ये । इति सङ्कल्प्य “गणनान्त्वा” “हे हेरम्ब” इत्यादिमन्त्रैरावाहयेत् ।

**ॐ गणानान्त्वा गणपतिꣳहवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥**

**ॐ हे हेरम्ब त्वमेहचेहि अम्बिकात्र्यम्बकात्मज ।**

**सिद्धिबुद्धिपते त्र्यक्ष लक्ष्यलाभयितः पितः ॥**

**नागस्य नागहारस्त्वं गणराज चतुर्भुज ।**

**भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरस्वधैः ॥**

**आवाहयामि पूजार्थं रक्षार्थञ्च मम क्रतोः ।**

**इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष माम् ॥**

इत्यावाह्य-

ॐ भूर्भुवः स्वः गणपतये सिद्धिबुद्धिसहिताय साङ्गाय सायुधाय सवाहनाय सपरिवाराय इदमासनं समर्पयामि ।

ततः सहस्रशीर्षेत्यादिषोडशमन्त्रैः षोडशोपचारैः पूजयेत् ।

तद्यथा-

आसनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, यज्ञोपवीतम्, वस्त्रम्, चन्दनम्, दूर्वा, अक्षताः, धूपः, दीपः,

नैवेद्यम्, आचमनीयम्, ताम्बूलम्, वस्त्रालङ्कारादियल्लभ्यम्, दक्षिणाद्रव्यम्, पादवन्दनम् । एभिः सम्पूज्य नारिकेलादिफलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कुर्यात् ।

**ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ।**
**भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥**
**द्वैमातुर कृपासिन्धो षाण्मातुराग्रजप्रभो ।**
**वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥**
**अनेन फलदानेन फलदोऽस्तु सदा मम ।**
**वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ ॥**
**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥**

*॥ इति गणेशपूजा ॥*

## (च) ततः कलशस्कन्धप्रदेशे

ॐ गणपत्यादि-पाञ्चायतनेभ्यो नमः । ॐ विनायकादि-पञ्चलोकपालेभ्यो नमः ।
ॐ सूर्यादि-नवग्रहेभ्यो नमः । ॐ ईश्वराद्यधिदेवेभ्यो नमः ।
ॐ अग्न्यादि-प्रत्यधिदेवेभ्यो नमः । ॐ इन्द्रादि-दशदिक्पालेभ्यो नमः ।
ॐ ध्रुवाद्यष्टवसुभ्यो नमः । ॐ धात्रादि-द्वादशादित्येभ्यो नमः ।
ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः । ॐ गौर्यादि-षोडशमातृभ्यो नमः ।
ॐ आवहादि-सप्तमरुद्भ्यो नमः । ॐ विनायकाय नमः । ॐ ब्रह्मणे नमः ।
ॐ विष्णवे नमः । ॐ रुद्राय नमः । ॐ अर्काय नमः । ॐ वनस्पतये नमः ।
इति यथालब्धोपचारैः संपूज्य प्रार्थयेत् ।

**सूर्यः शौर्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः ।**
**सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः ॥**
**राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिम् ।**
**नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥**

*॥ इति ॥*

## (छ) अथ रक्षाबन्धनपूजा

यव-दूर्वा-सर्षप-गोमय-चन्दन-दधिसहितां रक्षां ताम्रपात्रे निधाय पात्रं स्पृशन् नारायणकवचं पठेत् ।

**ॐ पूर्वे रक्षतु गोविन्द आग्नेयां धरणीधरः ।**
**याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥१॥**

**वारुण्यां केशवो रक्षेद् वायव्यां मधुसूदनः ।**

**उत्तरे श्रीधरो रक्षेत् ऐशान्यां तु गदाधरः ॥२॥**

**ऊर्ध्वं गोवर्धनो रक्षेद् अधस्तात् तु महीधरः ।**

**एवं दशदिशो रक्षेद् वासुदेवो जनार्दनः ॥३॥**

**यज्ञाग्रे रक्षतात् शङ्खः पृष्ठे वै पद्ममुत्तमम् ।**

**वामपार्श्वे गदा रक्षेत् दक्षिणे तु सुदर्शनः ॥४॥**

**उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ।**

**ऋग्वेदमच्युतो रक्षेद् यजुर्वेदमधोक्षजः ॥५॥**

**कृष्णो रक्षतु सामानमथर्वाणञ्च माधवः ।**

**उपविष्टाँश्च विप्राँस्तान् अनिरुद्धोऽभिरक्षतु ॥६॥**

वक्ष्यमाणमन्त्रैः पूजयेत् ।

**ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किारामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥७॥**

**स्वराडसिसपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्य मित्रहा ॥८॥**

**रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्रक्षोहणो वो वलगहनोवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ॥९॥**

**सप्तऽऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति सदमप्प्रमादम् ।**

**सप्तापः स्वपतो लोकमीयुस्तत्रजागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥१०॥**

*॥ इति ॥*

## (ज) ऋषिप्रतिष्ठा

तत ऋषिप्रतिष्ठा कार्या । तद्यथा गन्धपुष्पाक्षतान् गृहीत्वा–

**ॐ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्तये ब्रह्मणे ।**

**तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥**

**ॐ मनोजूतिर्ज्जुषतामाज्यस्य बृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमन्दधातु ॥**

**विश्वेदेवासऽइह मा दयन्तामों ३ प्रतिष्ठ ।**

एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ।

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति सदमप्रमादम् ।**

**सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥**

प्रतिष्ठा सुप्रतिष्ठितास्तु ।

इति मन्त्रेण ऋष्युपरि गन्धाक्षतान् निक्षिपेत् ।

अथावाहनम्– पुष्पाक्षतान् गृहीत्वा दक्षिणस्थं प्रथमं ऋषिं स्पृशन्– ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपम् आवाहयामि । भो कश्यप ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ १ ॥

पुनर्गन्धाक्षतान् गृहीत्वा द्वितीयमृषिं स्पृशन्– ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजम् आवाहयामि । भो भरद्वाज ! इहागच्छ, इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ २ ॥

पुनर्गन्धाक्षतान् गृहीत्वा तृतीयमृषिं स्पृशन्– ॐ भूर्भुवः स्वः गौतमाय नमः गौतमम् आवाहयामि । भो गौतम ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां कारोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ ३ ॥

पुनर्गन्धाक्षतान् गृहीत्वा चतुर्थमृषिं स्पृशन्– ॐ भूर्मुवः स्वः अत्रये नमः अत्रिम् आवाहयामि । भो अत्रे ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ ४ ॥

पुनर्गन्धाक्षतान् गृहीत्वा पञ्चममृषिं स्पृशन्– ॐ भूर्भवः स्वः जमदग्नये नमः जमदग्निम् आवाहयामि । भो जमदग्ने ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ ५ ॥

पुनर्गन्धाक्षतान् गृहीत्वा षष्ठमृषिं स्पृशन्– ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठम् आवाहयामि । भो वसिष्ठ ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ ६ ॥

पुनर्गन्धाक्षतान् गृहीत्वा सप्तममृषिं स्पृशन्– ॐ भूर्भवः स्वः विश्वामित्राय नमः विश्वामित्रम् आवाहयामि । भो विश्वामित्र ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरः सुप्रसन्नो वरदो भव ॥ ७ ॥

पुनर्गन्धाक्षतान् गृहीत्वा ऋषिपत्नीं स्पृशन्– ॐ भूर्भुवः स्वः अरुन्धत्यै नमः अरुन्धतीमावाहयामि । भो अरुन्धति ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरा सुप्रसन्ना वरदा भव ॥ ८ ॥

ततः पठेत्–

**ॐ इमामेव गौतम-भरद्वाजावयमेव गौतमोऽयं भारद्वाज इमामेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेतिहऽवै**

**नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ।**

## (भ) ऋषिपूजनम्

ततः सङ्कल्पः – अद्येत्यादि पूर्वोक्तसङ्कल्पसिद्धिरस्तु मम आत्मनः श्रुतिः स्मृतिपुराणोक्तफलावाप्तये श्रीपरमेश्वरप्रीत्यर्थम् उत्सर्जनाङ्गत्वेन अरुन्धतीसहितकश्यपादिसप्तर्षिपूजनमहं करिष्ये ।

ततो ऋषीन् ध्यायेत् ।

ध्यानम्

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति सदमप्रमादम् ।**

**सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ।**

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥**

ॐ सहस्रशीर्षापुरुष... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः ध्यानसहितमावाहनं समर्पयामि ।

आसनम्

**सुवर्णरचितं दिव्यं नानारत्नमनोहरम् ।**

**आसनं रुचिरं यच्च गृह्यन्तां भो मुनीश्वराः ॥**

ॐ पुरुषऽएवेदꣳसर्वम् ... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः आसनं समर्पयामि ।

पाद्यम्

**गङ्गाजलं समानीतं गन्धद्रव्येण संयुतम् ।**

**पाद्यार्थं प्रतिगृह्णन्तु कश्यपाद्या महर्षयः ॥**

ॐ एतावानस्य महिमातो... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः पाद्यं समर्पयामि ।

अर्घ्यम्

**सुवर्णपात्रसंयुक्तं गन्धपुष्पाक्षतैर्युतम् ।**

**सप्तर्षयः गृहाण त्वं इदमर्घ्यं मयाऽर्पितम् ॥**

ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः ... ॥ ॐ भुर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः। अर्घ्यं समर्पयामि ।

आचमनम्

**कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् ।**

**दत्तमाचमनीयं च ऋषीणां प्रीतये सदा ॥**

ॐ ततो विराडजायत ... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः आचमनीयं समर्पयामि ।

स्नानम्

**सुगन्धिद्रव्यसंयुक्तं पवित्रं मङ्गलं जलम् ।**

**स्नानार्थं च समानीतं गृह्यन्तां मुनयो मुदा ॥**

ॐ तस्माद्यज्ञात्सर्वहुत... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः स्नानं समर्पयामि ।

पञ्चामृतस्नानम्

**पयो दधि घृतं चैव मधुशर्करयाऽन्वितम् ।**

**पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥**

ॐ पञ्चनद्यः ... ॥ ॐ भूभुर्वः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः पञ्चामृतस्नानं समर्पयामि ।

गन्धोदकस्नानम्

**गन्धद्वारां दुराधर्षां नित्यपुष्टाङ्करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः गन्धोदकस्नानं समर्पयामि ।

रुद्राभिषेकमहास्नानम्

**भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः महाभिषेकस्नानं समर्पयामि ।**

वस्त्रम्

**सूक्ष्माण्यतीव शुभ्राणि वस्त्राणि विविधानि च ।**

**ऋषयः प्रतिगृह्णन्तु उष्णशीतनिवारणे ॥**

ॐ तस्माद्यज्ञात्सर्वहुतऽऋच ... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः । वस्त्रं समर्पयामि ।

यज्ञोपवीतम्

**नानामन्त्रैः समुद्भूतं त्रिवृतं ब्रह्मसूत्रकम् ।**

**प्रत्येकं दीयते स्वच्छं गृह्णन्तु ऋषिसत्तमाः ॥**

ॐ तस्मादश्वाऽअजायन्त ... ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः यज्ञोपवीतानि समर्पयामि ।

चन्दनम्

**श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं प्रयच्छामि ऋषीणां प्रीतिहेतवे ॥**

ॐ तं यज्ञं बर्हिषि ... ॥ ॐ भूभुर्वः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः चन्दनं समर्पयामि ।

अक्षताः

**शुभ्रतण्डुलजाः शुक्लाः शङ्खशुभ्रा मनोरमा ।**

**अक्षतान् सम्प्रयच्छामि गृह्णन्तु मुनिपुङ्गवाः ॥**

ॐ अक्षन्नमीमदन्तह्य... ॥ ॐ भूभुर्वः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः अक्षतान् समर्पयामि ।

हरिद्राकुङ्कुमादीनि

**हरिद्रां कुङ्कुमं चैव कज्जलं भूषणानि च ।**

**कङ्कणं कण्ठसूत्रं च गृहाण परमेश्वराः ॥**

ॐ अहिरिव ... ॥ ॐ भूभुर्वः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्योः नमः कुङ्कुमादीनि समर्पयामि ।

पुष्पाणि

**माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।**

**मयार्पितानि पुष्पाणि गृहाण मुनिपुङ्गवाः ॥**

ॐ यत्पुरुषं व्यदधुः कतिधा ... ॥ ॐ भू.. अरुन्धतीस... ॥ नानाविधपुष्पाणि समर्पयामि ॥

धूपः

**कृष्णागरुसमुद्भूतो गुग्गुलोऽयं दशाङ्गकः ।**

**सुगन्धः कश्यपादीनामृषिभ्यो दीयतेऽधुना ॥**

ॐ ब्राह्मणोस्य मुखमासीद् ...॥ ॐ भू ... अरुन्धतीसहितकश्यपादि ... । धूपमाघ्रापयामि ।

दीपः

**पञ्चवर्त्तिसमायुक्तः सर्वमङ्गलशोभनः ।**

**मया निवेदितो भक्त्या दीपोऽयं प्रतिगृह्यताम् ॥**

ॐ चन्द्रमामनसो जात... ॥ ॐ भू ... अरुन्धतीसहित ... । दीपं दर्शयामि ।

नैवेद्यम्

**फलमूलसमायुक्तं नानाशाकसमन्वितम् ।**

**शर्कराघृतसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥**

ॐ नाभ्याऽआसीदन्तरिक्षꣳ... ॥ ॐ भू ... अरुन्धतीसहित... । नैवेद्यं समर्पयामि ।

नैवेद्यान्ते आचमनीयं समर्पयामि । उत्तरापोशानं हस्तप्रक्षालनं करोद्वर्तनार्थे चन्दनं च समर्पयामि ।

फलम्

**नारिकेलं च कूष्माण्डं कदली कर्कटीफलम् ।**

**ऋतुकालोद्भवं चान्यद्दीयतेऽद्य मुनीश्वराः ।**

ॐ याः फलिनीर्या ... ॥ ॐ भू ... अरुन्धतीसहितकश्यपादि... । फलानि समर्पयामि ।

ताम्बूलम्

**पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।**

**एलालवङ्गसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

ॐ यत्पुरुषेण हविषा देवा... ॥ ॐ भू ... अरुन्धतीसहितकश्यपादि ... । ताम्बूलं समर्पयामि ।

दक्षिणा

**हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥**

ॐ हिरण्यगर्भः सम्... ॥ ॐ भू... अरुन्धतीसहितकश्यपादि... । दक्षिणां समर्पयामि ।

आर्तिक्यम्

**ब्रह्मिष्ठा ब्रह्मरूपाश्च कश्यपाद्या महर्षयः ।**

**ब्रह्मप्रज्ञादिदातारः सन्तु मे कीर्तिकर्मणि ॥**

ॐ इदꣳहविः... ॥ ॐ भू... अरुन्धती... ॥ आर्तिक्यं दर्शयामि ॥

प्रदक्षिणा

**यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि तानि विनश्यन्तु प्रदक्षिणपदे पदे ॥**

ॐ सप्तास्यासन् परिधय... ॥ ॐ भू... अरुन्धतीसहितकश्यपादि... ॥ प्रदक्षिणां समर्पयामि ॥

नमस्कारः

**शरणागतदीनार्तपरित्राणपरायणाः ।**

**रक्षन्तु मुनयः सर्वे मामद्य शरणागतम् ॥**

**सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च सुखप्रदाः ।**

**पुष्पाञ्जलिं मया दत्तं गृह्णन्तु मुनिपुङ्गवाः ॥**

ॐ यज्ञेन यज्ञमयजन्त... ॥ ॐ भू... अरुन्धतीसहित... ॥ मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

प्रार्थना

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं मुनीश्वराः ।**

**यत् पूजितं मया देवाः परिपूर्णं तदस्तु मे ॥**

अर्पणम्

अनेन कृतेन ध्यानावाहनादिषोडशोपचारादिपूजनेन अरुन्धतीसहितकश्यपादिसप्तर्षयः प्रीयन्तां न मम ॥ ॐ तत्सत् ब्रह्मार्पणमस्तु ।

*॥ इति ऋषिपूजनम् ॥*

| | षोडशोपचारपूजनक्रमः– | | वाजसनेयिनां षोडशोपचाराः- |
|---|---|---|---|
| १. | आसनम् | १. | आवाहनम् |
| २. | पाद्यम् | २. | आसनम् |
| ३. | अर्घ्यम् | ३. | पाद्यम् |
| ४. | आचमनीयम् | ४. | अर्घ्यम् |
| ५. | पञ्चामृतम् | ५. | आचमनीयम् |
| ६. | वस्त्रम् | ६. | स्नानम् |
| ७. | चन्दनम् | ७. | वस्त्रम् |
| ८. | अक्षताः | ८. | यज्ञोपवीतम् |
| ९. | पुष्पाणि | ९. | चन्दनम् |
| १०. | धूपः | १०. | पुष्पम् |
| ११. | दीपः | ११. | धूपः |
| १२. | नैवेद्यम् | १२. | दीपः |
| १३. | द्रव्यम् | १३. | नैवेद्यम् |
| १४. | पादवन्दनम् | १४. | दक्षिणाद्रव्यं, ताम्बूलम् |
| १५. | आरार्तिक्यम् | १५. | आरार्तिकं, प्रदक्षिणा |
| १६. | नमस्कारः | १६. | मन्त्रपुष्पाञ्जलिः, नमस्कारः |

## (ञ) तन्तुदेवतापूजनम्

तत्रादौ यज्ञोपवीतप्रक्षालनम्

**आपो हि ष्ठेति तिसृणां सिन्धुद्वीपऋषिः आपो देवता गायत्री छन्दः यज्ञोपवीतप्रक्षालने विनियोगः।**

**ॐ आपो हि ष्ठा मयोभुवस्तानऽऊर्ज्जे दधातन। महे रणाय चक्षसे।**

**यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः।**

**तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः।**

यज्ञोपवीतानि प्रक्षालनानन्तरं गायत्रीमन्त्रैर्दशवारमभिमन्त्र्य तन्तुदेवतानामावाहनं कुर्यात्।

**प्रणवस्य ब्रह्माऋषिः परमात्मादेवता गायत्रीछन्दः प्रथमतन्तौ ॐ कारावाहने विनियोगः।**

प्रथमतन्तौ ॐ काराराय नमः। ॐ कारमावाहयामि।

**अग्निन्दूतमिति मेधातिथिर्ऋषिः अग्निर्देवता गायत्री छन्दः द्वितीयतन्तौ अग्न्यावाहने विनियोगः॥**

**ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे।**

**देवाँ२॥ऽआसादयादिह॥**

द्वितीयतन्तौ अग्नये नमः। अग्निमावाहयामि।

**नमोऽस्तु सर्पेभ्य इत्यस्य प्रजापतिर्ऋषिः सर्पा देवताः अनुष्टुप् छन्दः तृतीयतन्तौ सर्पावाहने विनियोगः ।**

**ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।**

तृतीयतन्तौ सर्पेभ्यो नमः । सर्पानावाहयामि ।

**वयᳬसोमेत्यस्य बन्धुर्ऋषिः सोमो देवता गायत्री छन्दः चतुर्थतन्तौ सोमावाहने विनियोगः ।**

**ॐ वयᳬसोम व्रते तव मनस्तनूषु बिभ्रतः ।**

**प्रजावन्तः सचेमहि ॥**

चतुर्थतन्तौ सोमाय नमः । सोममावाहयामि ।

**उदीरतामित्यस्य शङ्ख ऋषिः पितरो देवता त्रिष्टुप् छन्दः पञ्चमतन्तौ पित्रावाहने विनियोगः ।**

**ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ।**

**असुं यऽईयुरवृकाऽऋतज्ञास्ते नोवन्तु पितरो हवेषु ॥**

पञ्चमतन्तौ पितृभ्यो नमः । पितृन् आवाहयामि ।

**प्रजापतेरित्यस्य हिरण्यगर्भ ऋषिः प्रजापतिर्देवता त्रिष्टुप् छन्दः षष्ठतन्तौ प्रजापत्यावाहने विनियोगः ॥**

**ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव ॥**

**यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयᳬस्याम पतयो रयीणाम् ॥**

षष्ठतन्तौ प्रजापतये नमः । प्रजापतिमावाहयामि ।

**आ नो नियुद्भिरित्यस्य वसिष्ठ ऋषिः अनलो देवता त्रिष्टुप् छन्दः सप्तमतन्तौ अनिलावाहने विनियोगः ।**

**ॐ आ नो नियुद्भिः शतिनीभिरद्ध्वरᳬसहस्रिणीभिरुपयाहि यज्ञम् ।**

**वायोऽअस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥**

सप्तमतन्तौ अनिलाय नमः । अनिलमावाहयामि ।

**सुगाव इत्यस्यात्रिर्ऋषिः गृहपतयो देवता आर्षी त्रिष्टुप् छन्दः अष्टमतन्तौ यमावाहने विनियोगः ।**

**ॐ सुगावो देवाः सदनाऽअकर्म यऽआजग्मेदᳬसवनञ्जुषाणाः ।**

**भरमाणा वहमाना हवीᳬष्यस्मे धत्त वसवो वसूनि स्वाहा ॥**

अष्टमतन्तौ यमाय नमः । यममावाहयामि ।

**विश्वेदेवासऽआगत इत्यस्य मधुच्छन्दा ऋषिः विश्वेदेवा देवता त्रिष्टुप् छन्दः नवमतन्तौ विश्वेषां देवानामावाहने विनियोगः ।**

**ॐ विश्वेदेवासऽआगत श्रृणुतामऽइमᳬहवम् । एदम्बर्हिर्निषीदत ॥**

नवमतन्तौ विश्वेभ्यो देवेभ्यो नमः । विश्वान् देवान् आवाहयामि ।

## (ट) ग्रन्थिदेवताऽऽवाहनम्

ब्रह्मयज्ञानमित्यस्य प्रजापतिर्ऋषिः ब्रह्मा देवता गायत्री छन्दः ग्रन्थिमध्ये ब्रह्मावाहने विनियोगः ।

**ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः ।**

**सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥**

इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः विष्णुर्देवता गायत्री छन्दः ग्रन्थिमध्ये विष्ण्वावाहने विनियोगः ।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाँसुरे स्वाहा ॥**

त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः रुद्रो देवता विराट् ब्राह्मी त्रिष्टुप् छन्दः ग्रन्थिमध्ये रुद्रावाहने विनियोगः ।

**ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम् ।**

**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥**

यज्ञोपवीतग्रन्थिदेवताभ्यो नमः । ग्रन्थिदेवता आवाहयामि ।

प्रणवाद्यावाहितदेवताभ्यो नमः । यथास्थानमहं न्यसामि ॥

मानसोपचारैः सम्पूज्य ध्यानम्

**प्रजापतेर्यत् सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् ।**

**ब्रह्मत्वसिद्ध्यै च यशः प्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् ॥**

## (ठ) अथ ऋषितर्पणम्

आचम्य प्राणानायम्य देशकालादीन् सङ्कीर्त्य छन्दसां क्वचिदनध्ययनादिकाले पठनादनधिकारिभिः श्रवणाच्च प्राप्तमालिन्यस्य निरासार्थमुत्सर्गाङ्गतर्पणमहङ्करिष्ये । इति सङ्कल्प्य सव्येन प्रागग्रैः दर्भैः देवतीर्थेन देवतर्पणं देवानामञ्जलित्रयं दद्यात् ।

**ॐ विश्वेदेवासऽआगत श्रृणुतामऽइमँहवम् ।**

**एदम्बर्हिर्निषीदत ॥**

**ॐ विश्वेदेवाः श्रृणुतेमँहवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ।**

**येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम् ॥**

इति मन्त्रेण देवानावाह्य

ॐ देवास्तृप्यन्ताम् । ॐ छन्दांसि तृप्यन्ताम् । ॐ वेदास्तृप्यन्ताम् ।

ॐ ऋषयस्तृप्यन्ताम् । ॐ पुराणाचार्यास्तृप्यन्ताम् । ॐ गन्धर्वास्तृप्यन्ताम् ।

ॐ इतराचार्यास्तृप्यन्ताम् । ॐ संवत्सराः सावयवास्तृप्यन्ताम् ।

## (ड) वंशानां ब्रुवणम्

ततो द्विराचमनं प्राणायामं कृत्वा पश्चात् वंशानां ब्रुवणम् ।

अथ वँशः समानमासाञ्जीवीपुत्रान्मासाञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः

कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात् कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥ १ ॥

अथ वꣳशस्तदिदं वयꣳशौपर्णाय्याच्छौपर्णाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्योवैजवापाच्च गौतमाच्च गौतमो वैजपायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ १ ॥

अग्निवेश्यः सैतवात् सैतवः पाराशर्य्यात् पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद् भारद्वाजो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद् घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात् पाराशर्य्यो-जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चा-सुरायणस्त्रैवणेस्त्रैवणिरौपजङ्घनेरौपजङ्घनिरासुरेरासुरिर्भारद्वाजाद् भारद्वाजऽआत्रेयात् ॥ २ ॥

आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद् गौतमो वात्स्यात् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात् कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्राद् आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचआथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्वाद्दैवो मृत्योः प्राध्वꣳसनाद् मृत्युः प्राध्वꣳसनः प्राध्वꣳसनात्ऽ प्राध्वꣳसनः एकर्षेरेकर्षिर्विप्रचितेर्विप्रचितिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ ३ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ वꣳशस्तदिदं वयꣳशौपर्णाय्याच्छौपर्णाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्य साङ्कृत्याच्च भारद्वाजाच्च भारद्वाजऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकायनाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्याभ्यां कौण्डिन्यऽऔर्णवाभेभ्यऽऔर्णवाभाः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ ४ ॥

आग्निवेश्यः सैतवात्सैतवः पाराशर्य्यात् पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बलाकाकौशिकाद्बलाकाकौशिकः काषायणात् काषायणः सौकरायणात्सौकरायणस्त्रेवणेस्त्रैवणिरौपजङ्घनेरौपजङ्घनिः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्य्यायणः पाराशर्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजङ्घनेरौपजङ्घनि-रासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयात् ॥ ५ ॥

आत्रेयोमाण्टेर्माण्टिर्गौतमाद्गौतमोगौतमाद्गौतमो वात्स्याद्वात्स्यः शण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्-कैशोर्यः काप्यः कुमारहारितात् कुमारहारितोगालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो

वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्यऽआङ्गिरसऽ आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्विभ्यामश्विनौदधीच आथर्वणा-द्दध्यङ्ङाथर्वणो दैवादथर्वाद्दैवो मृत्योः प्रध्वꣳसनात् मृत्युः प्रध्वꣳसनः प्रध्वꣳसनात् प्रध्वꣳसनऽएकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ ६ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ वꣳशस्तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद् वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्गी पुत्राद्गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद् गार्गीपुत्रो गार्गीपुत्राद् गार्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकी पुत्राच्छौनकीपुत्रः ॥१॥

काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्यामाठरीपुत्रः
कौत्सीपुत्रात्कौसीपुत्रो बौधीपुत्राद्बौधीपुत्रः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो
वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्रऽआत्रेयीपुत्रादात्रेयीपुत्रो
गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो
वार्क्कारुणीपुत्राद्वार्क्कारुणीपुत्रऽआर्त्त-भागीपुत्रादार्त्तभागीपुत्रः शौंगीपुत्राच्छौंगीपुत्रः साङ्कृतीपुत्राच्छाङ्-कृतीपुत्रः आलम्बीपुत्रादालम्बीपुत्रऽआलम्बायनीपुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो
माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः

शाण्डीलीपुत्राच्छाण्डीलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रो
वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः
साञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥ २ ॥

प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्रऽआसुरायणादासुरायणऽआसुरे-

रासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुणऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो
वाजश्रवाजिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोसिताद्वार्षगणादसितोवार्षगणो
हरितात्कश्यपात् हरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैर्ध्रुवेः
कश्यपोनैर्ध्रुविर्वाचोवागम्भिण्याऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि
वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥

इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाजऽइमावेव इमावेव विश्वामित्रजमदग्नी
अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिवाचा
ह्यन्नमद्यतेत्तिर्हवैनामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति यऽएवं वेद ॥ ४ ॥ ब्राह्मणोक्ता ऋषयस्तृप्यन्ताम् ॥

"सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः" चतुर्वारं गायत्रीं जपेयुः ।

ततः सावित्र्याश्चतुः कृत्वाऽनुब्रुवणम् । तदन्ते सर्वेषां 'ॐ विरताः स्म' इति सकृदुच्चैर्ब्रुयुः ।

ॐ चतुर्दशकाण्डेषु अध्यायोक्ता ऋषयस्तृप्यन्ताम् ।

ॐ चतुर्दशकाण्डेषु शतोक्ता ऋषयस्तृप्यन्ताम् ।

ॐ चतुर्दशकाण्डेषु प्रपाठोक्ता ऋषयस्तृप्यन्ताम् ।

ॐ चतुर्दशकाण्डेषु अन्त्यकण्डिको ऋषयस्तृप्यन्ताम् ।

ॐ चतुर्दशकाण्डेषु अन्त्यफक्किकोक्ता ऋषयस्तृप्यन्ताम् ।

**ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्** । **योसावादित्ये पुरुषः सोसावहम्** ॥

**ॐ३म् खम्ब्रह्म** । अध्यायोक्ता ऋषयस्तृप्यन्ताम् ।

## (ढ) प्रार्थना

**तदेतदृचाभ्युक्तं न मृषा श्रान्तं यदवन्ति देवा इति नहैवैवं विदुषः किञ्चन न मृषा श्रान्तं भवति तथोहास्यै तत्सर्वं देवाऽअवन्ति** ॥ १ ॥

## (ण) स्व-स्वप्रवराणां विसर्जनम्

**ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे** ।

**उपप्रयन्तु मरुतः सुदानवऽइन्द्रप्राशूर्भवा सचा** ॥

जले प्रास्यन्

**समुद्रङ्गच्छ स्वाहान्तरिक्षं गच्छस्वाहा देवᳬंसवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा छन्दाᳬंसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभो गच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनो मेहार्दियच्छ दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मना पृण स्वाहा** ॥१॥

द्विराचम्य समस्तकर्मार्पणम् । जलमादाय- अनेन कृतेन अध्यायोत्सर्गकर्माङ्गत्वेन ऋषिपूजनतर्पणादिकर्मणा श्रीभगवान् परमेश्वरः प्रीयताम् न मम । ॐ तत्सत् श्रीब्रह्मार्पणमस्तु । इति ।

## (त) कृताकृतम् ऋषिश्राद्धम्

तद्यथा आचम्य प्राणानायम्य देशकालादीन् सङ्कीर्त्य अद्य उत्सर्गाख्यं सप्तर्षिश्राद्धमहं करिष्ये ।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्** ।

**समूढमस्यपाᳬंसुरे** ॥

इति मन्त्रेण दिग्बन्धः ।

ऋषिश्राद्धस्योपहाराः शुचयो भवन्तु । इत्युपहारप्रोक्षणम् । देशकालपात्रसम्पदस्तु ।

अरुन्धतीसहितकश्यपादिसप्तर्षीणामिदमासनं यथायथाविभागं वः स्वाहा । अरुन्धतीसहितकश्यपादिसप्तऋषयः यथादत्तं गन्धाद्यर्चनं यथायथाविभागं वः स्वाहा ॥ इति ॥ ऋषिश्राद्धसाङ्गतासिद्ध्यर्थं सप्तसङ्ख्याकान् ब्राह्मणान् यथाकालं यथोपपन्नेन सन्तोषयिष्ये । तेन अरुन्धतीसहितकश्यपादिसप्तर्षयः प्रीयन्ताम् । सप्तर्षिश्राद्धसाङ्गतासिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणाम् आचार्याय तुभ्यमहं सम्प्रददे ।

आचार्यः–

**ॐ कोऽदात् कस्माऽअदात् कामोऽदात् कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते॥**

इति पठेत्।

उपविष्टेषु ब्राह्मणेषूदकादिदानम्। तद्यथा– **ॐ शिवा आपः सन्तु। सौमनस्यमस्तु। अक्षतञ्चारिष्टमस्तु। अघोरा ऋषयः सन्तु। सन्तु।** इति प्रतिवचनम्।

पश्चात्- कुशजलदक्षिणाद्रव्यमादाय पूर्वोक्तसङ्कल्पसिद्धिरस्तु उत्सर्गकर्मणो न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां सम्प्रददे।

प्रार्थना

**उत्सर्गाङ्गभूतं ऋषिश्राद्धं परिपूर्णमस्तु।**

अस्तु परिपूर्णमिति सर्वे आचार्यादयः प्रतिवचनम्।

**सहनोऽस्तु। सहनोऽवतु। सहनऽइदं वीर्यवदस्तु। इन्द्रस्तद्वेद येन यथा न विद्विषामहे।** इति॥

**ॐ उभा कवी युवा योनो धर्मः परापतत्। परिसख्यस्य धर्मिणो विसख्यानि विसृजामहे॥**

इति च सर्वे जपेयुः। विरताः स्म इति प्रब्रूयुः। इति ऋषिश्राद्धम्।

## (थ) स्वपितृभ्यो यज्ञोपवीतदानम्

प्राचीनावीती (अपसव्यम्) दक्षिणमुखाः सर्वे सपितृका अपितृकाः कुशोदकं गृहीत्वा पुरतो यज्ञोपवीतानि निधाय अद्यामुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः।

द्वितीयम्- अद्यामुकगोत्रेभ्यः मातामह-प्रमातामह-वृद्धप्रमातामहेभ्यः।

तृतीयम्- कव्यवाडनलादिदिव्यपितृभ्यः इमानि यज्ञोपवीतानि स्वधा सम्पद्यताम्। इति ऋष्युपरि समर्पयेयुः। सव्यं कृत्वा आचम्य ब्राह्मणं गन्धादिना सम्पूज्य यज्ञोपवीतानि दत्वा पश्चात् स्वयमपि विधिवद् धारयेत्।

## (द) यज्ञोपवीतधारणविधिः

नवीनयज्ञोपवीतधारणम्

यज्ञोपवीतं गृहीत्वा सज्जीकृत्य–

ॐ यज्ञोपवीतमितिमन्त्रस्य परमेष्ठी ऋषिः लिङ्गोक्ता देवता त्रिष्टुप् छन्दः यज्ञोपवीतधारणे विनियोगः।

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।**

**आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥**

**यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि।**

इति पठन् पृथक्-पृथक् धारणं कुर्यात्। तद्धारणेराद्यन्तयोराचमनम्।

## (ध) जीर्णयज्ञोपवीतत्यागः

जीर्णयज्ञोपवीतत्यागमन्त्रः

**ॐ एतावद्दिनपर्यन्तं ब्रह्म त्वं धारितं मया ।**

**जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥**

इति मन्त्रेण जीर्णसूत्रं शिरोमार्गेण निःसार्य शुद्धस्थाने त्यजेत् ।

पश्चाद् यथाशक्ति गायत्रीजपं कुर्यात् ।

अर्पणम्– अनेन नवयज्ञोपवीतधारणार्थे कृतेन यथाशक्तिगायत्रीजपकर्मणा श्रीभास्करदेवता प्रीयतां न मम ।

*॥ इति ॥*

## (न) अथ रक्षाबन्धनम्

**येन बद्धो बली राजा दानवेन्द्रो महाबलः ।**

**तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥**

## (प) अन्यद्दिने यज्ञोपवीतधारणप्रयोगः

यज्ञोपवीतान्युदकेन प्रक्षाल्यानन्तरम् आचम्य सङ्कल्पं कुर्यात् ।

अद्य मम श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं तथा च अमुककर्माङ्गत्वेन नवीनयज्ञोपवीतधारणमहं करिष्ये । इति सङ्कल्प्य यज्ञोपवीतानि करसम्पुटे दशवारं गायत्रीमन्त्रेणाभिमन्त्रयेत् । तदनन्तरम्-

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।**

**आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥**

**यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥**

इति मन्त्रं पठित्वा पृथक् पृथक् यज्ञोपवीतानि दक्षिणहस्तद्वारा धार्याणि । प्रतियज्ञोपवीतधारणान्ते आचम्य पश्चात् यथाशक्ति गायत्रीर्जपेत् ।

ततो जीर्णयज्ञोपवीतत्यागः कार्यः ।

अर्पणम्- अनेन नवयज्ञोपवीतधारणार्थे कृतेन यथाशक्तिजपाख्येन कर्मणा श्रीसविता देवताः प्रीयतां न मम ॥

॥ इति अन्यद्दिने यज्ञोपवीतधारणविधिः ॥

## शब्दार्थाः

| | | |
|---|---|---|
| ताम्रपात्रे | = | तामाको भाँडामा |
| यव | = | जौ |
| सर्षपः | = | सर्सिउँ |
| चन्दनम् | = | चन्दन |
| स्पृशन् | = | छोएर, छुँदै |
| कर्कटिका | = | काँक्रो |
| कदली | = | केरा |
| प्रयच्छामि | = | अर्पण गर्दछु, दिन्छु |
| शुभ्राः | = | सेता |
| गृहाण | = | लिनुहोस् |
| ताम्बूलम् | = | पान |
| एला | = | अलैँची |
| दीनः | = | दुःखी |
| परित्राणः | = | रक्षा, बचावट |
| सज्जीकृत्य | = | ठिक्क पारेर, सजाएर |
| जीर्णम् | = | पुरानो, थोत्रो |
| भास्करः | = | सूर्य, आदित्य |
| पश्चात् | = | पछिबाट |
| धार्याणि | = | लगाउनु |
| कण्ठाभरणम् | = | मङ्गलसूत्र, तिलहरी पोते |
| सूक्ष्मवस्त्रम् | = | मुलायम, रेसमी वस्त्र । |
| निधाय | = | राखेर |
| दूर्वा | = | दुबो |
| गोमयम् | = | गोबर |
| दधि | = | दही |
| नारिकेलम् | = | नरिवल |
| कूष्माण्डम् | = | कुभिन्डो |
| उदकं, तोयम् | = | पानी |
| अतीव | = | ज्यादै |
| पूगीफलम् | = | सुपारी |
| नागवल्ली | = | पानको पात |
| लवङ्गम् | = | ल्वाङ |
| आर्तः | = | पीडित |
| परायणम् | = | सिपालु, कुशल |
| नवीनम् | = | नयाँ, नूतन |
| पृथक् पृथक् | = | अलग, अलग |
| दत्त्वा | = | दिएर |
| स्वयम् | = | आफैं |
| कङ्कणम् | = | चुरा |
| कज्जलम् | = | गाजल |
| कार्पासः | = | कपास |

## अभ्यासार्थाः प्रश्नाः

१. रक्षाबन्धनपूजायामावश्यकानि वस्तूनि कानि ?
२. यज्ञोपवीततन्तौ पूजनीयानां देवानां नामानि विलिखत ।
३. अन्यद्दिने यज्ञोपवीतधारणं कथं क्रियते ? विलिखत ।
४. नवीनयज्ञोपवीतधारणप्रकारो लेखनीयः ।
५. कथं त्यज्यते जीर्णयज्ञोपवीतम् ? त्यागमन्त्रश्च कः ?
६. शुक्लयजुर्वेदीयस्वस्तिवाचनमन्त्राः कति सन्ति ? तेषां प्रतिकमात्रं लेख्यम् ।
७. समन्त्रप्रतीकं कर्मपात्रनिर्माणविधिं लिखत ।
८. दीपपूजनविधिं यथाग्रन्थं प्रतिपादयत ।
९. कलशे प्रक्षेप्तव्यानि वस्तूनि कानि ? समन्त्रप्रतीकं प्रदर्शयत ।
१०. ग्रन्थाधारेण गणेशपूजनप्रकारं विलिखत ।
११. कलशस्कन्धप्रदेशे पूजनीयाः देवाः के ? तेषां नामानि लिखत ।
१२. रक्षासूत्रपूजनक्रमे पठनीयं नारायणकवचं विलिखत ।
१३. कैः मन्त्रैः ऋषिप्रतिष्ठा क्रियते ? पद्धत्यनुसारेण प्रस्तूयत ।
१४. वाजसनेयिनां षोडशोपचाराः के ? नामानि लिखत ।
१५. ग्रन्थिदेवतानां नामानि लिखत ।
१६. ऋषितर्पणप्रकारं वर्णयत ।
१७. स्वपितृभ्यो यज्ञोपवीतदानविधिं यथाग्रन्थं विवेचयत ।
१८. परस्परं मेलयत ।

| | |
|---|---|
| सप्तधान्यम् | मुक्ता |
| सर्वौषधिः | चणकम् |
| सप्तमृद् | शठी |
| पञ्चपल्लवः | गोकुलम् |
| पञ्चरत्नम् | न्यग्रोधः |

चतुर्थः पाठः

# मातृकापूजा

**मातृकापूजायामाभ्युदयिकश्राद्धे चावश्याकानि वस्तूनि-**

नवीनं काष्ठपीठम्, गोमयम्, दूर्वाः, पुष्पाणि, अक्षताः, गन्धम्, धूपः, दीपः, नैवेद्यानि, फलानि, पूगीफलम्, ताम्बूलम्, अवीरम्, यज्ञोपवीतम्, वस्त्रम्, कुङ्कुमम्, सौभाग्यद्रव्याणि, आमान्नानि, (सिद्धान्नानि वा), अन्यानि यवकुशादीनि सर्वाणि पूजाद्रव्याणि च ।

## (क) मातृकापूजा

मातृकास्थापनप्रकारो यथा

नवीनकाष्ठपीठस्य प्रथमपङ्क्तौ–

| | | |
|---|---|---|
| अदित्यादिसप्तदशगोमयमातरः स्थापनीयाः | – | १७ |
| द्वितीयपङ्क्तौ– गौर्य्यादिदशतोरणमातरः स्थापनीयाः | – | १० |
| तृतीयपङ्क्तौ– नन्दादिसप्तद्वारमातरः स्थापनीयाः | – | ७ |
| चतुर्थपङ्क्तौ– गौर्य्यादिषोडशमातरः स्थापनीयाः | – | १६ |
| पञ्चमपङ्क्तौ– ब्राह्म्यादिसप्तमातरः स्थापनीयाः | – | ७ |
| | | ५७ |

इति संस्थाप्य प्राणप्रतिष्ठापूर्वकं चतुर्थ्यन्तपदैः मन्त्रैश्च पूजयेत् ।

अत्र च–

**"कस्मिन् कुले मङ्गलपञ्चकं च ।**
**कस्मिन् कुले मङ्गलसप्तकं स्यात् ॥**
**त्रिमङ्गलं चापि कुले विशुद्धो ।**
**नोल्लङ्घनीयाः कुलदेशधर्माः ॥**
**मृत्तिका मङ्गलाचापि षोडशस्तम्भमण्डपः ।**
**रमणीया पूर्वमुखः कदलीस्तोरणान्वितः ॥"**

## (ख) नान्दीमुखश्राद्धविधिः

**"प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।**
**नान्दीमुखंविवाहादौ श्राद्धे पाकपरिक्रिया ॥**
**एकविंशत्यहर्यज्ञे विवाहे दशवासरम् ।**
**त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते ॥"**

## (ग) वृद्धिश्राद्धस्य नावश्यकत्वम्

**"जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु ।**

**वत्सराभ्यन्तरे पित्रोः वृषस्योत्सर्गकर्मणि ॥**

**वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेत् ॥** इति ॥

अथ प्रयोगः

कर्ता शुचिराचान्तः कर्मपात्रं निर्माय तत्रस्थ जलेन आत्मानं पूजासामग्रीं च संप्रोक्ष्य कुशजलान्यादाय सङ्कल्पं कुर्यात् ।

## (घ) प्रतिज्ञासङ्कल्पः

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ अद्य पूर्वोच्चारितसङ्कल्पसिद्धिरस्तु अमुकगोत्रः अमुकप्रवरः अमुकवेदशाखाध्यायी समस्तवर्गादिभिः सहित अमुकशर्माहं (वर्माहं, गुप्तोऽहं वा) मम श्रुतिस्मृतिपुराणोक्तफलप्राप्तये करिष्यमाण अमुककर्मणो निर्विघ्नतासिद्धये सर्वाभ्युदय प्राप्तये च अमुककर्मणः पूर्वाङ्गत्वेन यथालब्धोपचारैः दीपकलशगणेशपूजनपूर्वकं पीठे स्थापितानां लिखितानां वा अदित्यादीनां मातृणां पूजनम् आभ्युदयिकश्राद्धञ्च अहं करिष्ये ।

इति प्रतिज्ञाय प्रायश्चित्तगोदानं कृत्वा दीपादीन् संपूज्य मातृणां पूजनं कुर्यात् ।

**मातृकापूजनप्रयोगः**

प्रक्षालितकरचरणौ पूर्वाभिमुखो यजमानः कुशहस्तः प्रथमं गोमयसप्तदशपुञ्जेषु पूजयेत् ।

## (ङ) सङ्कल्पः

ॐ अद्येह देशकालौ स्मृत्वा ममेप्सितामुक-इष्टकामनासिद्धये तत्प्रतिबन्धदुरितोपशमनाय मृत्तिकामङ्गलत्वेन श्रीविनायकपूजनपूर्वकम् अदित्यादिसप्तदशगोमयमातृदेवपूजनमहङ्करिष्ये ।

## (च) आदौ विनियोगः

ॐ कारस्य ब्रह्मा ऋषिर्दैवी गायत्री छन्दः परमात्माग्निर्देवता सर्वकर्मारम्भे विनियोगः ।

पुनश्च–

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां जमदग्नि-भरद्वाज-भृगव-ऋषयोऽग्निवायुसूर्यादेवता उष्णिक्-दैवी-बृहत्यश्छन्दांसि गणपत्याद्यावाहने विनियोगः । ततः गणानान्त्वेति ... मन्त्रेण गणेशं संपूज्य वक्रतुण्डेति प्रार्थयेत् ।

## (छ) प्राणप्रतिष्ठा

ततः सप्तदशगोमयपिण्डेषु स्पृशन् प्रतिष्ठां कुर्यात् । तद्यथा–

**ॐ मनोजूतिर्जूषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमन्दधातु ।**

**विश्वेदेवासऽइहमादयन्तामों३॥ प्रतिष्ठा** ॥

*॥ इति प्रतिष्ठाप्य ॥*

## (ज) आवाहनपूर्वकपूजनम्

ॐ भूर्भुवः स्वः अदित्यादिसप्तदशगोमयमातर इहागच्छत इहतिष्ठत इत्यावाहनम् ।

**अदितिर्देवमाता च स्वाहा सिद्धिः सरस्वती ।**

**कीर्तिलक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥**

**बुद्धिर्लज्जा वपुः शान्तिरेता गोमयमातरः ॥**

ततः पाद्यादिभिः पूजनम् ।

तद्यथा–

ॐ अदित्यै नमः । ॐ देवमात्रे नमः । ॐ स्वाहायै नमः । ॐ सिद्ध्यै नमः ।

ॐ सरस्वत्यै नमः । ॐ कीर्त्यै नमः । ॐ लक्ष्म्यै नमः । ॐ धृत्यै नमः ।

ॐ मेधायै नमः । ॐ तुष्ट्यै नमः । ॐ श्रद्धायै नमः । ॐ क्रियायै नमः ।

ॐ मत्यै नमः । ॐ बुद्ध्यै नमः । ॐ लज्जायै नमः । ॐ वपुषे नमः ।

ॐ शान्त्यै नमः ।

ततः कलशे गणपतेः दुर्गायाः वायोः आकाशस्य अश्विनीकुमारयोश्च पञ्चोपचारैः पूजयेत् ।

## (झ) अथ गौर्यादिदशतोरणमातृणां पूजनम्

ॐ अद्येत्यादि देशकालौ स्मृत्वा ममामुकाभिष्टकामसिद्ध्यर्थं गौर्यादिदशतोरणमातृपूजनमहं करिष्ये । इति सङ्कल्प्य ।

ॐ भूर्भुवः स्वः गौर्यादिदशतोरणमातर इहागच्छत इह तिष्ठत इत्यावाह्य पूजयेत् ।

तद्यथा–

**ॐ गौरी च धनदा नन्दा मङ्गला विमला बला ।**

**गङ्गा च यमुना धात्री विधात्री तोरणाम्बिका ॥**

ॐ गौर्य्यै नमः । ॐ धनदायै नमः । ॐ नन्दायै नमः । ॐ मङ्गलायै नमः ।

ॐ विमलायै नमः । ॐ बलायै नमः । ॐ गङ्गायै नमः । ॐ यमुनायै नमः ।

ॐ धात्र्यै नमः । ॐ विधात्र्यै नमः ।

## (ञ) द्वार-मातृपूजा

ॐ अद्येत्यादि देशकालमुच्चार्य ममामुकाभीष्टकामनासिद्धचर्थं निर्विघ्नपरिसमाप्त्यर्थं च नन्दादिसप्तद्वारमातृपूजनमहं करिष्ये ।

इति सङ्कल्प्य-

ॐ भूर्भुवः स्वः नन्दादिसप्तद्वारमातरः इहागच्छत इह तिष्ठत इत्यावाह्य पूजयेत् ।

ताश्च

**नन्दा नन्दिनी वाशिष्ठी वसुदेवा च भार्गवी ।**

**जया च विजया चैव सप्तैता द्वारमातरः ॥**

ॐ नन्दायै नमः । ॐ नन्दिन्यै नमः । ॐ वाशिष्ठ्यै नमः ।

ॐ वसुदेवायै नमः । ॐ भार्गव्यै नमः । ॐ जयायै नमः ।

ॐ विजयायै नमः ।

## (ट) गौर्य्यादिषोडशमातृपूजा

ॐ अद्येत्यादि देशकालौ स्मृत्वा अद्य कर्तव्यामुककर्म निर्विघ्नतया समाप्त्यर्थं तदङ्गत्वेन गणेशदुर्गासूर्यादिनवग्रहान् गौर्य्यादिषोडशमातृः ब्राह्म्यादिसप्तमातृः पूजनं चाहं करिष्ये । कलशे गणेशादीन् संपूज्य ।

ॐ भूर्भुवः स्वः गौर्य्यादयो मातरः इहागच्छत इह तिष्ठत इत्यावाहच पूजयेत् ।

तद्यथा–

**गौरी पद्मा शची मेधा सावित्री विजया जया ।**

**देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥**

**धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ।**

ॐ गौर्य्यै नमः । ॐ पद्मायै नमः । ॐ शच्यै नमः ।

ॐ मेधायै नमः । ॐ सावित्र्यै नमः । ॐ विजयायै नमः ।

ॐ जयायै नमः । ॐ देवसेनायै नमः । ॐ स्वधायै नमः ।

ॐ स्वाहायै नमः । ॐ मात्रे नमः । ॐ लोकमात्रे नमः ।

ॐ धृत्यै नमः । ॐ पुष्ट्यै नमः । ॐ तुष्ट्यै नमः ।

ॐ आत्मनः कुलदेवातायै नमः ।

## (ठ) अथ ब्राह्म्यादिसप्तमातरः (भित्तौ घृतधारामातरः)

**ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।**

**वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः ॥**

ॐ ब्राह्म्यै नमः । ॐ माहेश्वर्यै नमः । ॐ कौमार्यै नमः ।

ॐ वैष्णव्यै नमः । ॐ वाराह्यै नमः । ॐ इन्द्राण्यै नमः ।

ॐ चामुण्डायै नमः । इति संपूज्य धूपदीपनैवेद्यादिकमलङ्कारसौभाग्यद्रव्याणि च समर्प्य स्वाचारात् सपत्नीको यजमानः पक्वान्नं शिरसि निधाय वसोर्धारां प्रतीच्छेत् ।

## (ङ) वसोर्धारा

तत्र मन्त्राः

**ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ।**

**देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥**

**ॐ ता ँ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।**

**यामस्य कण्वोऽअदुहत् प्रपीना ँ सहस्रधारां पयसा महीङ्गाम् ॥**

**कण्वो हेमां ददर्श साहस्मै सहस्रधाराः सर्वान् कामान् दुदुहे ।**

(तथैवैतद्यजमानाय सहस्रधाराः सर्वान्कामान्दुदुहे) ।

*॥ इति ॥*

ततः–

**द्यौः शान्तिरिति पुनस्त्वेति च जपेत् प्रणमेच्च ।**

**(ढ) अच्युतस्मरणम्**

**यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु ।**

**न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**

ॐ अच्युताय नमः ३ इति स्मरेत् ।

*॥ इति मातृकापूजा ॥*

पञ्चमः पाठः

# आभ्युदयिकश्राद्धम्

**अथ आभ्युदयिकश्राद्धम्**

**तत्र विशेषः**

**आवाहनं स्वधाशब्दः पिण्डाग्नौकरणं तथा ।**
**विकरं पिण्डदानञ्च साङ्कल्पे षड् विवर्जयेत् ॥**
**साङ्कल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ॥**

*॥ इति मात्स्ये ॥*

**उत्सवानन्दसन्तानयज्ञोद्वाहादिमङ्गले ।**
**मातरः प्रथमं पूज्या पितरस्तदनन्तरम् ॥**
**ततो मातामहानां च विश्वेदेवास्तथैव च ।**

अन्यच्च

**पूर्वाह्णे दैविकं कार्यमपराह्णेतु पैतृकम् ।**
**एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥**
**अत्राभ्युदयिके युग्मा ब्राह्मणाः ऋजवो ।**
**दर्भाः प्राङ्मुखेभ्यः उदङ्मुखः उदङ्मुखेभ्यो वा प्राङ्मुखः ॥**

सङ्कल्पवाक्ये

**निमन्त्रणे प्रतिज्ञायामक्षय्यासनयोस्तथा ।**
**एषु षष्ठी प्रयोक्तव्या श्राद्धप्रकरणे बुधैः ॥**
**अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा ।**
**अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः ॥**

**अथ प्रयोगः-**

ततः कर्ता प्रक्षालितपाणिपादावाचान्तः प्राङ्मुखः उदङ्मुखो वा शुद्धासने उपविश्य दीपं प्रज्वाल्य संपूज्य च कर्मपात्रङ्कृत्वा ॐ अपवित्रः पवित्रो वा... इत्यादि मन्त्रेण श्राद्धदेशं द्रव्याण्यात्मानं च सिञ्चेत् ।

## (क) प्रतिज्ञासङ्कल्पः

ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनां तथा अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानां तथा

अमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां नान्दीमुखानां वसुसत्यसंज्ञकविश्वेदेवपूर्वकाणाममुककर्माङ्गतया आभ्युदयिकश्राद्धमेभिर्द्रव्यैरहं करिष्ये । इति सङ्कल्पं कृत्वा त्रिर्गायत्रीं जपेत् ।

## (ख) ततः प्रार्थना

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

*॥ इति त्रिर्जपेत् ॥*

## (ग) दिग्बन्धनम्

यवकुशानादाय

**ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।**

**अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ॥**

**ॐ तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ।**

**अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः ॥**

**ॐ प्रतिचीमाज्यपास्तद्वद् । अपहताऽअसुरारक्षाꣳसि व्वेदिषदः ।**

**ॐ उदीचीमपि सोमपाः । अपहताऽअसुरारक्षाꣳसि व्वेदिषदः ।**

**ॐ ऊर्ध्वतस्त्वर्यमारक्षेत्कव्यवाडनलोऽप्यधः ।**

**अपहताऽअसुरारक्षाꣳसि व्वेदिषदः ॥**

**ॐ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।**

**सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥**

इति पूर्वादिदिक्षु यवान् विकिरेत् ।

## (घ) नीविबन्धनम्

**ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।**

**त्वं वनेभ्यस्त्वमौषधीभ्यस्त्वन्नृणान्नृपतेजायसेशुचिः ॥**

इति मन्त्रेण दक्षिणकट्यां नीवीमारोपयेत् ।

## (ङ) आसनम् [1]

ॐ अद्येहामुकसगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनां तथा अमुकसगोत्राणां पितृपितामहप्रपितामहानाम् अमुकामुकामुकशर्मणां नान्दीमुखानां तथा अमुकसगोत्राणां

---

१ ✒ पुराणसमुच्चयेऽपि - "अस्मच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचिदिति" (श्राद्धकाशिका, पृ.- ५१४ ।)

मातामह-प्रमातामह-वृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां नान्दीमुखानामाभ्युदयिकश्राद्धे श्राद्धसम्बन्धिनां वसुसत्यसंज्ञकविश्वेषां देवानामिदमासनं वो नमः ॥

ॐ अद्येहामुकसगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकीदेवीनां नान्दीमुखीनाम् आभ्युदयिकश्राद्धे इदमासनं (इमान्यासनानि वा) युष्मभ्यं नमः ।

(एकवचने तु ते नमः)

ॐ अद्येहामुकसगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानामाभ्युदयिकश्राद्धे इदमासनं युष्मभ्यं नमः ।

ॐ अद्येहामुकसगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानामाभ्युदयिकश्राद्धे इदमासनं युष्मभ्यं नमः । ऋज्वमूलकुशरूपमासनं सर्वेभ्यो दद्यात् । ततो गन्धाक्षतपुष्पताम्बूलवस्त्रादिभिः समभ्यर्च्य धूपदीपनैवेद्यं च कारयेत् ।

## (च) अर्पणम्

यवकुशजलान्यादाय

ॐ अद्येहामुकसगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकीदेवीनां नान्दीमुखीनां तथा अमुकसगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानां तथा अमुकसगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकामुकशर्मणां सपत्नीकानां नान्दीमुखानां श्राद्धसम्बन्धिनो वसुसत्यसंज्ञकविश्वेदेवा एतान्यर्चनविधौ गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलद्रव्ययज्ञोपवीतवस्त्राणि वो नमः ॥

पुनश्च

ॐ अद्येहामुकसगोत्रा मातृपितामहीप्रपितामह्यः अमुकामुकामुकीदेव्यः नान्दीमुख्य आभ्युदयिकश्राद्धे एतान्यर्चनविधौ गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि युष्मभ्यं नमः ।

पुनः यवकुशजलान्यादाय

ॐ अद्येहामुकसगोत्राः पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणः नान्दीमुखाभ्युदयिकश्राद्धे एतान्यर्चनविधौ गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि युष्मभ्यं नमः ।

पुनश्च

ॐ अद्येहामुकसगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकामुकशर्माणः सपत्नीकाः नान्दीमुखाभ्युदयिकश्राद्धे एतान्यर्चनविधौ गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि युष्मभ्यं नमः ।

## (छ) भूस्वामी

यवघृतमधुजलयुतमन्नं कुशादिकमादाय

**इदमामान्नं सजलमेतद्भूस्वामिपितृभ्यो नमः ।**

### (ज) अन्नसङ्कल्पः

तत्र प्रथमं विश्वेदेवानामुत्तानाभ्यां पाणिभ्यां देवपात्रमालभ्य

**ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।**

**समूढमस्य पाꣳसुरे ॥ कृष्णकव्यमिदं रक्ष मदीयम् ॥**

ॐ इदमन्नम् । ॐ इमा आपः । ॐ इदमाज्यम् । ॐ इदं हविः । एतान्युपकरणानीति ।

दक्षिणाङ्गुष्ठमारोप्य- **"ॐ यवोसियवयास्मद्वेषोयवयारातीः"** इति यवान् विकीर्य कुशादिकमादाय-

ॐ अद्येहामुकसगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनां तथा अमुकसगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानां तथा अमुक सगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकशर्मणां सपत्नीकानां नान्दीमुखानां श्राद्धसम्बन्धिभ्यो वसुसत्यसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो इदमन्नं सजलं सोपस्करं वो नमः ।

पूर्ववत् पात्रालम्भनादिकं कृत्वा

ॐ अद्येहामुकसगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यः नान्दीमुखीभ्य आभ्युदयिकश्राद्धे इदमन्नं सजलं सोपस्करं युष्मभ्यं नमः ।

(पृथक् पृथक् करणे तु - ॐ अद्येहामुकसगोत्रायै अस्मन्मात्रेऽमुकीदेव्यै नान्दीमुख्यै इति वाक्यं प्रयोजनीयम् ।)

पुनः पूर्ववत् पात्रालम्भनादिकं कृत्वा-

ॐ अद्येहामुकसगोत्रेभ्यः पितृपितामहप्रपितामहेभ्योऽमुकामुकामुकशर्मभ्यो नान्दीमुखेभ्य आभ्युदयिकश्राद्धे इदमन्नं सजलं सोपस्करं युष्मभ्यं नमः ।

पूर्ववत् पात्रालम्भनादिकं कृत्वा-

ॐ अद्येहामुकसगोत्रेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य आभ्युदयिकश्राद्धे इदमन्नं सजलं सोपस्करं युष्मभ्यं नमः ।

गायत्रीं जप्त्वा प्रार्थयेत् ।

### (झ) प्रार्थना

**ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु श्रीभास्करस्य प्रसादतः ॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

**ॐ मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः ।**

**माध्वीर्नः सन्त्वोषधीः ॥**

**ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः ।**

**मधु द्यौरस्तु नः पिता ॥**

**ॐ मधुमान्नो वनस्पतिर्मधुमाँ२॥ऽअस्तुसूर्यः ।**

**माध्वीर्गावो भवन्तु नः ॥ ॐ मधु मधु मधु** इति । ततः पुरुषसूक्तादिकं च पठेत् ।

## (ञ) विकिरदानम् (केचिन्नैव कुर्वन्ति)

ततः प्रागग्रकुशायां भूमौ कुशयवजलान्यादाय

**ॐ असंस्कृतप्रमीतानां त्यागीनां कुलयोषिताम् ।**

**उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥**

कुशरूपमासनमास्तृतकुशत्रयोपरि उत्सृजेत् ।

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।**

**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥**

दत्तासनकुशोपरि तदन्नं विकिरेत् ।

ततः आचम्य हरिं स्मरेत् । ततः कुशदूर्वादलं गृहीत्वा भूमौ । **ॐ सुप्रोक्षितमस्तु ।**

**ॐ शिवा आपः सन्तु** । इति जलम् ।

**ॐ सौमनस्यमस्तु** । इति पुष्पम् ।

**ॐ अक्षतं चारिष्टमस्तु** । इति अक्षतानन्नपात्रेषु (ब्राह्मणकरे) निक्षिप्य ।

## (ट) अक्षय्योदकम्

सजलयवकुशत्रयमादाय

ॐ अद्येहामुकसगोत्रा मातृपितामहीप्रपितामह्योऽमुकामुकामुकीदेव्यो नान्दीमुख्यः आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयन्ताम् ।

पुनः यवजलकुशान्यादाय

ॐ अद्येहामुकसगोत्राः पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणो नान्दीमुखाः आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयन्ताम् ।

पुनश्च

ॐ अद्येहामुकसगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकामुकशर्माणः सपत्नीकाः नान्दीमुखाः आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयन्ताम् ।

ततः प्राङ्मुखोऽञ्जलिं बध्वा आशिषः प्रार्थयेत् ।

## (ठ) आशिषः प्रार्थना

**ॐ गोत्रन्नो वर्धताम् । ॐ वर्धताम् ।**

**ॐ दातारानोऽभिवर्धन्ताम् । ॐ वर्धन्ताम् ।**

**ॐ वेदाः सन्ततिरेव च । ॐ सन्तु ।**

**ॐ श्रद्धा च नो मा व्यगमत् । ॐ मागात् ।**

**ॐ बहुदेयं च नोऽस्तु । ॐ अस्तु ।**

**ॐ अन्नं च नो बहु भवेत् । ॐ भवतु ।**

**ॐ अतिथीं च लभेमहि । ॐ लभध्वम् ।**

**ॐ याचितारश्च नः सन्तु । ॐ सन्तु ।**

**ॐ मा याचिष्म कञ्चन । ॐ मा याचेथाः ।**

**ॐ एताः सत्या आशिषः सन्तु । ॐ सन्तु ।**

ततः श्राद्धकर्ता ब्राह्मणहस्तेन तिलकं कुर्यात् ।

**ॐ यं कामं कामयते सोऽस्मै कामः समृद्धचताम् ।**

## (ड) दक्षिणादानम्

ॐ अद्येहामुकसगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकीदेवीनां नान्दीमुखीनां तथा अमुकसगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानां तथा अमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानाम् आभ्युदयिकश्राद्धसम्बन्धिनां वसुसत्यसंज्ञकानां विश्वेषां देवानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थम् इमानि द्राक्षामलकफलमूलानि वनस्पतिदैवतानि तन्मूल्योपकल्पितं द्रव्यं विष्णुदैवतं दक्षिणात्वेन यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय दातुमहमुत्सृजे ।

पुनर्दक्षिणाद्रव्यमादाय

ॐ अद्येहामुकसगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकीदेवीनां नान्दीमुखीनां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमानि द्राक्षामलकफलमूलानि वनस्पतिदैवतानि तन्मूल्योपकल्पितं द्रव्यं वा विष्णुदैवतं दक्षिणात्वेन यथानामगोत्रायेति पूर्ववत् ।

पुनर्दक्षिणाद्रव्यमादाय

ॐ अद्येहामुकसगोत्राणां पितृपितामहप्रपितामहानामुकामुकामुकशर्मणां नान्दीमुखानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमानि द्राक्षामलकफलमूलानि वनस्पतिदैवतानि तन्मूल्योपकल्पितं द्रव्यं

विष्णुदैवतं दक्षिणात्वेन यथानामगोत्रायेत्यादि पूर्ववत् ।

पुनश्च

ॐ अद्येहामुकसगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां नान्दीमुखानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमानि फलमूलानि वनस्पतिदैवतानि तन्मूल्योपकल्पितं द्रव्यं वा विष्णुदैवतं दक्षिणात्वेन यथानामगोत्रायेत्यादि पूर्ववत् ।

## (ढ) नमस्कारः

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**
**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

इति त्रिः पठेत् ।

ततो **दीपाच्छादनं विधाय** हस्तौ पादौ प्रक्षाल्य आचम्य प्रार्थयेत् ।

## (ण) प्रार्थना

**ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**
**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥**
**आयुः प्रजां धनं विद्यां स्वर्गं मोक्षसुखानि च ।**
**प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः ॥**

## (त) कर्मसमर्पणम्

**ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिः स्वभावात् ।**
**करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत् ॥**
**यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**
**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**
**चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**
**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥**

ॐ यत्कृतं तत्सुकृतमस्तु यन्न कृतं तद्विष्णोः प्रसादात् ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्तु ।

ॐ अस्तु परिपूर्णम् ॥

## शब्दार्थाः

| | | | | | |
|---|---|---|---|---|---|
| प्रयच्छन्तु | = | दिऊन् | अर्चनविधौ | = | पूजा विधिमा |
| यशः | = | कीर्ति | उत्तरवृद्ध्या | = | उत्तरोत्तर क्रमले |
| पुष्टिः | = | पुष्ट | द्राक्षा | = | दाख |
| प्राप्नुयाम् | = | पाऊँ | आमलकम् | = | अमला |
| उत्थाय | = | उठेर | देयद्रव्यम् | = | दिने पदार्थ वा द्रव्य |
| विसृज्य | = | छोडेर, विसर्जन गरेर | अस्मत्कुलजाः | = | हाम्रा कुलमा जन्मेका |
| भ्रामयित्वा | = | घुमाएर | पितृमातृपरा | = | बाबु आमाको भक्त |
| कृत्वा | = | गरेर | विकिरम् | = | अगति परेर मरेका पितृहरूलाई दिने एक प्रकारको अन्न |
| पठित्वा | = | पढेर | नीवी | = | धोतीमा राखिएको कुश मोटक, धोती वा फरियाको मुजो |
| स्मृत्वा | = | सम्झेर | निष्क्रय | = | बदलामा दिइने द्रव्य, कुनै काम वा सेवाका लागि दिइने धन, भाडा, ज्याला । |
| सम्पूज्य | = | पूजा गरेर | | | |
| दद्यात् | = | देओस् | | | |
| उद्वाहः | = | विवाह | | | |
| चक्रवाकः | = | चखेवा | | | |
| सरसि | = | तलाउमा | | | |
| सम्प्रोक्ष्य | = | सेचन गरेर | | | |

## अभ्यासार्थाः प्रश्नाः

१. **किमर्थं मातृकापूजा विधीयते ?**

२. **कति द्वारमातरः ? तासां नामानि कानि ?**

३. **वसोर्धारापातनमन्त्राः के ? कुत्र पात्यते ?**

४. **मातृकापूजायां कस्य प्राधान्यं भवति ? कथञ्च ?**

५. **आभ्युदयिकश्राद्धकालः कः ? कति ब्राह्मणाश्च ?**

६. **आभ्युदयिकश्राद्धे अन्नदानवाक्यं लिखत ।**

७. **मातृकापूजायामावश्यकानि वस्तूनि कानि ?**

८. **गोमयमातरः कति सन्ति ? तासां नामानि कानि ?**

९. **तोरणमातॄणां नामानि लिखत ।**

१०. कर्मसमर्पणमन्त्रान् लिखत ।

११. श्राद्धसङ्कल्पवाक्ये विचारणीयाः विभक्तयः काः ?

१२. आभ्युदयिकश्राद्धगतं प्रतिज्ञासङ्कल्पवाक्यं विलिखत ।

१३. दिग्बन्धनमन्त्राः लेखनीयाः ।

१४. नीविबन्धनं क्रियते- दक्षिणकट्यां, वामकट्यां, वामहस्ते ।

१५. श्राद्धकाले पितॄणाम् आसनदानवाक्यं दर्शयत ।

१६. विश्वेदेवब्राह्मणार्चनविधौ आवश्यकानि वस्तूनि कानि ?

१७. विश्वेभ्यो देवेभ्योऽन्नदानसङ्कल्पवाक्यस्वरूपं प्रदर्शयत ।

१८. विकिरदानमन्त्रं लिखत ।

१९. अक्षय्योदकदानवाक्यं दर्शयत ।

२०. आशिषप्रार्थनामन्त्रान् प्रस्तूयत ।

२१. आभ्युदयिकश्राद्धगतं दक्षिणादानस्य सङ्कल्पवाक्यं प्रदर्शयत ।

२२. ॐ प्रमादात् कुर्वतां ... ॥ इति प्रार्थनाश्लोकं प्रपूरयत ।

षष्ठः पाठः

# शाला (मण्डप) निर्माणं संस्कारश्च

## मण्डप-चक्रम्

**ध्वजान् द्विहस्तायतिकांश्च पञ्चहस्तान् सुपीतारुणकृष्णनीलान् ।**

**श्वेतासितश्वेतसितान् दिगीशवाहान् वहेद्दिक्करवंशशीर्षे ॥**

(क्रियासारे) **मातंगस्तत्समहिषसिंहमत्स्यैणवाजिनः ।**

**वृषभं हंस गरुडो ध्वजमध्येक्रमाल्लिखेत् ॥** पञ्चमांशं निखनेदिति ।

**लोकेशवर्णास्त्रयुताः पताकाः शैलेन्दुदैर्घ्यायतिकाञ्च मध्ये ।**

**चित्रं ध्वजं दिक्करदैर्घ्यवंशत्रिदोस्ततं प्रान्तगकिङ्किणीकम् ॥** ॥ इति कुण्डमण्डपसिद्धिः ॥



| | | |
|---|---|---|
| १. पहेँलो वज्र लेखेको पताका | २. पहेँलो ऐरावत हात्ती लेखेको ध्वजा | ३. रातो शक्ति लेखेको पताका |
| ४. रातो भेडा लेखेको ध्वजा | ५. कालो दण्ड लेखेको पताका | ६. कालो राँगो लेखेको ध्वजा |
| ७. निलो खड्ग लेखेको पताका | ८. निलो सिंह लेखेको ध्वजा | ९. पहेँलो चक्र लेखेको पताका |
| १०. पहेँलो गरुड लेखेको ध्वजा | ११. सेतो पाश लेखेको पताका | १२. सेतो माछा लेखेको ध्वजा |
| १३. ध्वाँसे अङ्कुश लेखेको पताका | १४. ध्वाँसे मृग लेखेको ध्वजा | १५. हरियो गदा लेखेको पताका |
| १६. हरियो घोडा लेखेको ध्वजा | १७. सेतो त्रिशूल लेखेको पताका | १८. सेतो साँढे लेखेको ध्वजा |
| १९. सेतो कमण्डलु लेखेको पताका | २०. सेतो हाँस लेखेको ध्वजा | |
| बिचमा गरुड़ लेखेको घण्ट झुन्ड्याएको ठुलो ध्वजा राख्नुपर्छ । | | |

**मण्डपपूजायामावश्यकानि पूजाद्रव्याणि**

यवाः, तिलाः, कुशाः, गन्धम्, अक्षताः, विविधानि पुष्पाणि, (रक्त-श्वेत-हरित-कृष्ण-वर्णाः अक्षताश्च) पञ्चगव्यम्, पञ्चामृतम्, अर्घ्यम्, विविधवर्णानि ध्वजापताकादीनि, दूर्वा, सर्षपाः, दधिभक्तम्, धूपदीपनैवेद्यादीनि सर्वाणि पूजाद्रव्याणि सम्पादनीयानि ।

**अथोपनयनाङ्गत्वेन ग्रहयागार्थञ्च मण्डपविधिर्लिख्यते**

तत्रावश्यकं भूमिसंशोधनं शालानिर्माणप्रकारः शालासंस्कारः तत्प्रतिष्ठापूजाविधिश्च ।

तत्र शालायां मण्डपे वा हस्तखातविस्तारं समचतुरस्रं योन्यादियुतं कुण्डं कुर्यात् । तदशक्तौ स्थण्डिलं निर्माय तदीशानदिग्भागे नवग्रहस्थापनाय हस्तविस्तृतां वितस्त्युच्छ्रितां वप्रद्वयावृतां समचतुरस्राम् उदक्प्रवणां ग्रहवेदिं कुर्यात् । तस्याः प्रथमो वप्रो द्व्यङ्गुलोच्छ्रायो द्वितीयस्त्र्यङ्गुलोच्छ्रायो द्वावपि द्व्यङ्गुलविस्तारौ कर्त्तव्यौ । तत्र वेदिमध्येऽष्टदलकमलं निर्माय तत्तद्वर्णचूर्णेन पूरयित्वा कर्णिकायां पत्रेषु यथोक्तमण्डलेषु प्रतिमासु दध्यक्षतपुञ्जेषु वा तदाकारेण ग्रहाणामावाहनं कुर्यात् ।

## (क) मण्डपनिर्माणविधिः

**शाला विंशतिहस्ता स्यादुत्तमा कथिता बुधैः ।**
**षोडशद्वादशाहस्ता दशहस्ताधमाधमा ॥ १ ॥**
**सा तु पूर्वापरा कार्या चतुर्द्वारा सुतोरणा ।**
**मेखला हस्तमात्रा स्यादाभूष्य पुष्पपल्लवैः ॥ २ ॥**

**पीतवस्त्रेण संवेष्ट्य वितानादि ध्वजैर्वृता ।**

**अनेन विधिना शाला कृता सर्वार्थसाधिका ॥ ३ ॥**

## (ख) नारदोक्तं वेदिनिर्माणप्रमाणम्

**हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।**

**स्तम्भैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः ॥**

**समण्डपां चतुर्दिक्षु सोपानैरुपशोभिताम् ।**

**प्रागुदक्प्रवणारम्भांस्तम्भैर्हंसशुकादिभिः ॥**

**विचित्रितां चित्रकुम्भैर्विचित्रैस्तोरणाङ्कुरैः ।**

**एवं विधां समारोहेन्मिथुनं साग्निवेदिकाम् ॥**

विवाहपटले

**मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः ।**

**कार्यः षोडशहस्तो वा द्विषड्हस्तो दशावधि ॥**

**स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता ।**

**शोभिता चित्रिताकुम्भैरासमन्ताच्चतुर्दिशम् ॥**

संस्काररत्नमालायाम्

**आचार्यहस्तमानेन मण्डपे निर्मिते शुभे ।**

**मध्ये वेदिः प्रकर्तव्या चतुरस्रा समन्ततः ॥**

**"वटुहस्तमिता वेदिः"** इति वचनाच्च उपनयनकर्मणि वटुहस्तपरिमिताः विवाहे कन्याहस्तपरिमिता च युक्तियुक्तं प्रतिभाति । तथापि **"पितुरेवाचार्यत्वं नेतरस्य"** इति कर्कभाष्यानुसारेण आचार्यस्य (पितुः) हस्तप्रमाणमेव शास्त्रसम्मतम् । **"स्तम्भैश्चतुर्भिः"** इति लिखितमपि पूर्वदिशि अन्य एकस्तम्भः स्थापयन्तिः लोकाः । एवं पञ्चभिस्तम्भैर्वेदिं निर्मापयन्ति ।

## (ग) मण्डपसंस्कारः प्रतिष्ठा च

यथोक्तां शालां निर्माय मङ्गलघोषपुरःसरं कर्ता शालापूर्वद्वारमागत्याचम्य सुमुखश्चेति गणेशं नत्वार्घं संस्थाप्य कर्मपात्रं कृत्वा सङ्कल्पं कुर्यात् ।

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ अद्येहेत्याद्यमुकोऽहममुकराशेर्बालकस्य नाम्नो वा करिष्यमाण चूडोपनयनवेदारम्भसमावर्त्तनकर्मसु तत्पूर्वाङ्गत्वेन ग्रहमखकर्मणि च निर्मितायाः शालायाः संस्कारं करिष्ये । तदङ्गत्वेन शाला दिक्स्तम्भेष्विन्द्रादिदशदिक्पालानां चावाहनपूर्वकं पूजनं करिष्ये । इति सङ्कल्प्य शालां स्पृशेत् ।

**ॐ भूमिर्भूमिर्जगन्माता मातरस्त्वरमभ्यगात् ।**

**भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि समिद्यताम् ॥**

ततो यथाविधिसम्पादितपञ्चगव्येन कुशैर्देवस्यत्वेति मन्त्रेणाभिषिञ्चेत् ।

**ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।**

**सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥**

आपोहिष्ठेत्यादिना च सर्वत्र प्रोक्षणं कृत्वा दध्यक्षतान्गृहीत्वा पूर्वस्तम्भसमीपे गत्वा इन्द्रादीन् सम्पूजयेत् ।

## (घ) इन्द्रादिदेवानां पूजनम्

आवाहनम्

ॐ भूर्भुवः स्वः इन्द्र सरावत सवज्र सशक्तिक साङ्गोपाङ्ग मम यज्ञरक्षार्थमिहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ ।

**एह्येहि वृत्रघ्न गजाधिरूढ सहस्रनेत्र त्रिदशैकवन्द्य ।**

**शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ १ ॥**

**शचीपते महाबाहो सर्वाभरणभूषितः ।**

**आगच्छ भगवन्निन्द्र स्तम्भेस्मिन्सन्निधिं कुरु ॥ २ ॥** इत्यावाह्य ।

ध्यानम्

**शक्रश्चैरावतारूढो दिव्यसिंहासने स्थितः ।**

**श्वेतवर्णो वज्रधरोऽभयपाणिर्महाभुजः ॥ ३ ॥**

**चतुर्दन्तगजारूढो वज्रपाणिः पुरन्दरः ।**

**शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ॥ ४ ॥** ॥ इति ध्यात्वा ।

**ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम् ।**

**ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳस्वस्ति नो मघवा धात्विन्द्रः ॥**

इति मन्त्रेण पाद्यादि नीराजनान्तं सम्पूज्य प्रार्थयेत् ।

**पुरन्दर नमस्तेऽस्तु वज्रहस्त नमोऽस्तु ते ।**

**शचीसख नमस्तुभ्यं नमस्ते मेघवाहनः ॥ ५ ॥**

**देवराज गजारूढ पुरन्दर शतक्रतो ।**

**वज्रहस्त महाबाहो वाञ्छितार्थप्रदो भव ॥ ६ ॥** ॥ इति प्रार्थ्य ॥

आग्नेयस्तम्भसमीपे गत्वा दध्यक्षतान् गृहीत्वाग्निमावाहयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः अग्ने सपुण्डरीक सशक्तिक सायुध साङ्गोपाङ्गेहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ ।

**एह्येहि सर्वामरहव्यवाह मुनिप्रवर्यैरभितोभिजुष्ट ।**

**तेजोवतां लोकगणेन युक्तो ममाध्वरं पाहि कवे नमस्ते** ॥ इत्यावाह्य ।

ध्यानम्

**अग्निस्तु देवता तत्र रक्तवर्णोऽजवाहनः ।**

**चतुर्भुजो धृतामस्त्रत्रशुस्नुग्वरदाभयः ।**

**ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपव्व्रुवे ।**

**देवाँ२ऽआसादयादिह ॥**

इति पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ।

**आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः ।**

**धूम्रकेतुरजोध्यक्षस्तस्मै नित्यं नमो नमः ॥** ॥ इति प्रार्थ्य ॥

ततो दक्षिणस्तम्भसमीपे गत्वा दध्यक्षतान्गृहीत्वा यममावाह्य पूजयेत् ।

ॐ भूर्भुवः स्वः यम सवाहन सदण्ड सशक्तिक साङ्गोपाङ्गेहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ ।

**एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ।**

**शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखन्नमस्ते** ॥ ॥ इत्यावाह्य ॥

ध्यानम्

**यमस्तु देवता तत्र कृष्णवर्णो द्विबाहुकः ।**

**लुलायवाहनः श्रीमान्पाशदण्डधरः प्रभुः ॥**

इति ध्यात्वा

**ॐ असि यमोऽअस्यादित्त्योऽअर्व्वन्नसित्रितो गुह्येन व्व्रतेन ।**

**असि सोमेन समया व्विपृक्क्तऽआहुस्ते त्रीणि दिवि बन्धनानि ॥**

इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य पुष्पाञ्जलिं समर्प्य प्रार्थयेत् ।

**महान्तं महिषारूढं दण्डहस्तं महाबलम् ।**

**आवाहयामि यज्ञेस्मिन्पूजेयं प्रतिगृह्यताम् ॥** ॥ इति प्रार्थ्य ॥

ततो नैर्ऋत्यस्तम्भे दध्यक्षतान्गृहीत्वा निर्ऋतिमावाह्य सम्पूजयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः निर्ऋते सकुमुद सखड्ग सशक्तिक सपरिवार साङ्गोपाङ्गेहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ ॥

**एह्येहि रक्षोगणनायक त्वं विशालवेतालपिशाचसङ्घैः ।**

**ममाध्वरम्पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥**

**ॐ एष ते निर्ऋते भागस्तञ्जुषस्व स्वाहा ॥** ॥ इत्यावाह्य ॥

ध्यानम्

**रक्तबाहुश्चर्मधरो नाला निर्ऋतिवाहनः ।**

**ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ॥**

इति ध्यात्वा पाद्यादिनीराजनान्तं सम्पूज्य पुष्पाञ्जलिः ।

**निर्ऋतिं खड्गहस्तञ्च सर्वलोकैकपावनम् ।**

**आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥**

इति नत्वा पश्चिमस्तम्भसमीपे गत्वा दध्यक्षतान्गृहीत्वा वरुणमावाह्य सम्पूजयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः वरुण साञ्जन सपाश सशक्तिक सवाहन साङ्गोपाङ्गेहागच्छपूजार्थं त्वामावाहयामीह तिष्ठ ॥

**एह्येहि यादोगणवारिपानां गणेन पर्जन्यसहाप्सरोभिः ।**

**विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥** इत्यावाह्य ॥

ध्यानम्

**वरुणो देवता तत्र मकरोपरि संस्थितः ।**

**यष्टिपाशधरः श्रीमान् गदापद्मधरस्तथा ॥**

इति ध्यात्वा

**ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेडमानो वरुणेह बोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ १ ॥**

**इमम्मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥**

इति मन्त्रेण पाद्यादि नीराजनान्तं संपूज्य प्रार्थयेत् ।

**पाशहस्तं च वरुणं यादसांपतिमीश्वरम् ।**

**आवाहयामि यज्ञेऽस्मिन् वरुणाय नमो नमः ॥** ॥ इति प्रार्थ्य ॥

वायव्यस्तम्भे गत्वा दध्यक्षतान्गृहीत्वा वायुमावाह्य सम्पूजयेत् ।

आवाहनम्

भूर्भवः स्वः वायो सपुष्पदन्त साङ्ग सवाहन सशक्तिक सपरिवारेहागच्छ पूजार्थं त्वामावाहयामीह तिष्ठ।

**एह्येहि यज्ञं मम रक्षणाय मृगाधिरूढः सहसिद्धसङ्घैः ।**

**प्राणाधिपः कालकवेः सहायो गृहाण पूजां भगवन्नमस्ते** ॥ इत्यावाह्य ।

ध्यानम्

**वायुश्च देवता तत्र मृगारूढश्च मेचकः ।**

**अजाचर्मधरः श्रीमान्द्विभुजः परिकीर्तितः ॥** ॥ इति ध्यात्वा ॥

**ॐ वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः ।**

**तेऽअग्रेऽश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः ॥**

इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ।

**वायुमाकाशगं चैव पवनं वेगवद्गतिम् ।**

**आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥**

**अनाकारो महौजाश्च पश्चाद्दृष्टिर्गतिर्दिवि ।**

**तस्मै पूज्याय जगतो वायवेऽहं नमामि ते** ॥ इति नत्वा ॥

उत्तरस्तम्भे गत्वा दध्यक्षतान्गृहीत्वा कुबेरमावाह्य सम्पूजयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः कुबेर ससार्वभौम सगदायुध सवाहन सशक्तिक सपरिवार साङ्गोपाङ्गेहागच्छ पूजार्थं त्वामावाहयामि ।

**एह्येहि यक्षेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ।**

**सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते** ॥ इत्यावाह्य ।

ध्यानम्

**कुवेरदेवता तत्र द्विभुजो नरवाहनः ।**

**गदापाणिश्च ध्यातव्यो धनदो धननायकः** ॥ इति ध्यात्वा ॥

**ॐ वयꣳसोमव्रते तव मनस्तनूषु बिभ्रतः ।**

**प्रजावन्तः सचेमहि ॥**

इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य कुबेराय नमः इति पुष्पाञ्जलिं समर्पयेत् ।

ततः ईशानस्तम्भे दध्यक्षतान्गृहीत्वा ईश्वरमावाह्य सम्पूजयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः ईश्वर ससुप्रतीक सत्रिशूल सशक्तिक साङ्ग सवाहन सपरिवारेहागच्छ पूजार्थं त्वामावाहयामि ।

**एह्येहि विश्वेश्वर नस्त्रिशूल कपालखट्वाङ्गगणेन सार्द्धम् ॥**

**लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते** ॥ इत्यावाह्य ।

ध्यानम्

**ईश्वरः सर्वभूतानां वृषारूढश्चतुर्भुजः ।**

**त्रिशूलखट्वाङ्गवराभयहस्तः प्रकीर्तितः ॥** ॥ इति ध्यात्वा ॥

**ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।**

**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥**

इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ।

**वृषस्कन्धसमारूढः शूलहस्तस्त्रिलोचनः ।**

**आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥**

**सर्वाधिपो महादेव ईशानः शुक्ल ईश्वरः ।**

**शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नमः ॥** ॥ इति प्रार्थ्य ॥

पूर्वेशानयोर्मध्ये दध्यक्षतान्गृहीत्वा ब्रह्माणमावाह्य सम्पूजयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः ब्रह्मन् साङ्ग सपरिवार सायुध सवाहन सशक्तिकेहागच्छपूजार्थं त्वामावाहयामि ।

**एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः ।**

**सर्वस्य धाताह्यमितप्रभावो विशाध्वरं त्वां सततं शिवाय ॥** ॥ इत्यावाह्य ॥

ध्यानम्

**रक्तवर्णश्चतुर्बाहुर्हंसारूढश्चतुर्मुखः ।**

**पद्माक्षसूत्रवरदाभयहस्तो निरामयः ॥** ॥ इति ध्यात्वा ॥

**ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विशीमतः सुरुचो वेनऽआवः ।**

**स बुद्ध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥**

इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ।

**पद्मयोनिश्चतुर्मूर्तिर्वेदव्यासपितामहः ।**

**यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥** ॥ इति प्रार्थ्य ॥

नैर्ऋत्यपश्चिमयोर्मध्ये दध्यक्षतान्गृहीत्वानन्तमावाह्य सम्पूजयेत् ।

आवाहनम्

ॐ भूर्भुवः स्वः अनन्त साङ्ग सायुध सवाहन सशक्तिक सपरिवारेहागच्छ पूजार्थं त्वामावाहयामि ।

**एह्येहि पातालधरामरेन्द्र नागाङ्गना किन्नरगीयमानः ।**

**यक्षोरगेन्द्रामरलोकसङ्घैरनन्त रक्षाध्वरमस्मदीयम् ॥** ॥ इत्यावाह्य ॥

ध्यानम्

**अनन्तदेवतास्तत्र सहस्रफणमण्डितः ।**

**महामण्डलरूपो हि मधुपिङ्गललोचनः ॥** ॥ इति ध्यात्वा ॥

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**

**स भूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥**

ॐ अनन्ताय नमः । इति पाद्यादिनीराजनान्तं सम्पूज्य प्रार्थयेत् ।

**योसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ।**

**पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥** ॥ इति प्रार्थयेत् ॥

इति दिक्पालान् सम्पूज्य पुष्पाण्यवकीर्य पञ्चपल्लवादिभिः संशोध्य वस्त्रेणाच्छाद्य शालाप्रतिष्ठां कुर्यात् ।

## (ङ) शालाप्रतिष्ठा

**ॐ एतन्ते देवसवितर्य्यज्ञम्प्राहुर्ब्बृहस्प्पतये ब्ब्रह्मणे ।**

**तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥**

**ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य वृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमं दधातु ।**

**विश्वेदेवा सऽइह मादयन्तामोंꣳ॥ प्रतिष्ठ ॥**

ॐ भूर्भुवः स्वः यज्ञशाले सुप्रतिष्ठिता भव । इति प्रतिष्ठाप्य गौरसर्षपाँल्लाजाँश्च गृहीत्वा पूर्वाभिमुखः समन्त्रेणाभिमन्त्र्य सर्षपाक्षतादिकान्विकिरन् वक्ष्यमाणमन्त्राश्च पठन् त्रिप्रदक्षिणां कुर्यात् ।

## (च) प्रदक्षिणा

**भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ।**

**सर्वे ते ह्यपगच्छन्तु देवयागं करोम्यहम् ॥**

**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**

**सर्वेषामविरोधेन पूजाकर्म समारभे ॥**

**पाखण्डकारिणो भूता भूमौ ये चान्तरिक्षगाः ।**

**दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया ।**

**ॐ अयं पुरोहरिकेशः सूर्य्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ।**

**पुञ्जीकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः प्प्रहेतिस्तेब्भ्यो नमोऽअस्तु ते नोऽवन्तुतेनो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥१ ॥**

**नमोस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः । तेभ्यो० ॥ २ ॥**

**नमोस्तु रुद्रेभ्यो येन्तरिक्षे येषाम्वातऽइषवः ।**

**तेब्भ्यो दश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्दशोर्द्धाः ॥**

**तेभ्यो नमोऽअस्तु ते० ॥ ३ ॥**

**नमोस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्य इति पूर्ववत् ॥ ४ ॥**

**आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च प्प्रयन्त्स्वः ॥ ५ ॥**

**रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलग मुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं बलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥ ६ ॥**

**स्वराडसि सपत्नहा सत्त्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ॥७॥**

**रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्न्रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां बलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्य्यूहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ॥ ८ ॥**

**देवस्य त्वा सवितुः प्प्रसवेश्विनोर्बाहुब्भ्याम्पूष्णो हस्ताभ्याम् ।**

**आददे नार्यसीदमहꣳरक्ष सां ग्रीवाऽअपि कृन्तामि ।**

**यवोसि यवयास्मद्द्वेषो यवयारातीर्द्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धताँल्लोकाः पितृषदनाः पितृषदनमसि** ॥ इति प्रदक्षिणीकृत्य पश्चिमद्वारमागत्यैतानि पठेत् ।

## (छ) प्रार्थना

**यदत्र संस्थितं भूतं स्थानमावृत्य तिष्ठति ।**

**स्थानं त्यक्त्वा तु तत्सर्वं यत्रत्यं तत्र गच्छतु ॥ १ ॥**

**त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।**

**ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ॥ २ ॥**

**देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।**

**मुनयो ऋषयो गावो देवमातर एव च ॥ ३ ॥**

**सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विताः ।**

**ब्रह्माविष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह ॥ ४ ॥**

**शालां रक्षन्तु मे सर्वे घ्नन्तु रक्षांसि सर्वतः ।**

*॥ इति पठित्वा ॥*

## (ज) शालाप्रवेशनम्

पश्चिमद्वारेण शालां प्रविशेत् ।

मत्स्यपुराणे

**यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ।**

**पश्चिमद्वारमागत्य प्रविशेद्यागमण्डपम् ॥** ॥ इति ॥

सामान्यदीपं प्रज्वाल्याचम्य हवनवेदीसमीपे पुरोहितः प्राङ्मुखस्थितयजमानललाटे तिलकं कृत्वा पुष्पाञ्जलिं गृहीत्वा शालाया ईशानकोणे ग्रहवेदीं पश्चिमे हवनवेदीं च विधाय स्वस्तिवाचनं कुर्यात् । इति शालासंस्कारः प्रतिष्ठा च ।

॥ इति ॥

### शब्दार्थाः

| | | |
|---|---|---|
| समचतुरस्रम् | = | चारपाटा मिलेको |
| विस्तृताम् | = | फैलिएको |
| उच्छ्रायः | = | अग्लो |
| वितानम् | = | फैलाउनु |
| अवकीर्य | = | छरेर |
| आवृत्य | = | ढाकेर |
| संस्थितम् | = | रहेका |
| भूतानि | = | प्राणीहरू |
| त्यक्त्वा | = | छाडेर |
| गच्छतु | = | जाउन्, जाओस् |
| अध्वरे | = | यज्ञमा |
| मुदान्विता | = | खुसी भएर |
| रक्षाम् | = | रक्षा |
| कुर्वन्तु | = | गरून् |
| सपत्नीकः | = | पत्नीले सहित भएको |
| यजमानः | = | यजमान वा कर्ताले |
| पुत्रपौत्रसमन्वितः | = | छोरानातीले सहित |
| पश्चिमद्वारम् | = | पश्चिमपट्टिको ढोकामा |
| आगत्य | = | आएर |
| यज्ञमण्डपम् | = | यज्ञशालामा |
| प्रविशेत् | = | प्रवेश गरोस् |
| स्थावराणि | = | स्थावर, वृक्ष, लता आदि |
| चराणि | = | चर, पक्षी, कीट,पतङ्गादि |
| ब्रह्मादिदेवैः | = | ब्रह्मादि देवताले |
| शालाम् | = | यज्ञशालालाई |
| रक्षन्तु | = | रक्षा गरून् |
| सर्वतः | = | चारैतिरबाट |
| रक्षांसि | = | राक्षसहरूलाई |
| घ्नन्तु | = | नाश गरुन् |
| ललाटे | = | निधारमा |
| तिलकम् | = | तिलक, चन्दन |
| कृत्वा | = | लगाएर, गरेर |
| स्वस्तिं वाचयेत् | = | स्वस्तिवाचन गराओस् |
| वितस्तिः | = | बाह्र अङ्गुलको नाप वा बित्ता |
| क्षेत्रपालगणैः | = | क्षेत्रपालादि गणले युक्त भएका, सँगै |

| | | | |
|---|---|---|---|
| स्थण्डिलम् | = परिष्कृत भूमि, इँटा लगाएर बनाएको वेदि | वप्रद्वयावृताम् | = दुईगुणा माटाका थुप्राले बनेको |
| | | हस्तखातविस्तारम् | = एक हात गहिरो र फराकिलो |

## अभ्यासार्थाः प्रश्नाः

१. **यज्ञमण्डपनिर्माणप्रकारं विवेचयत ।**

२. **हवनार्थे कुण्डनिर्माणविधिः कः ? कथं निर्मीयते कुण्डम् ?**

३. **कतिहस्तपरिमिता शाला उत्तमा मन्यते ?**

४. **ॐ एतन्ते देवसवितः ... मन्त्रोऽयं कस्मिन्कर्मणि प्रयुज्यते ?**

५. **यज्ञमण्डपे केन द्वारेण कथं प्रवेशनीयः ?**

६. **मण्डपे पूजनीयानां दिक्पालदेवानां नामानि स्थानानि च प्रदर्शयत ?**

७. **यज्ञशालायाः कस्मिन् कोणे ग्रहवेदीं हवनवेदीं च निर्मीयेते ?**

८. **मण्डपपूजायाम् आवश्यकानि पूजाद्रव्याणि कानि ? विलिखत ।**

९. **नारदीयो वेदिनिर्माणप्रमाणश्लोकः कः ?**

१०. **विवाहपटले वेद्याः कीदृशं स्वरूपम् ?**

११. **मण्डपसंस्कारविधिर्लेखनीयः ।**

१२. **कुबेरावाहनमन्त्रो विलेखनीयः ।**

१३. **शालाप्रतिष्ठाप्रकारं प्रदर्शयत ।**

१४. **ॐ अयं पुरोहरिकेशः ... ॥ इति मन्त्रं प्रपूरयत ।**

१५. **शालायाः पश्चिमद्वारमागत्य पठनीयान् प्रार्थनाश्लोकान् लिखत ।**

सप्तमः पाठः

# चूडाकर्म

**चूडायां विशेषः**

**(किमर्थं शिखारक्षणं केशादिकर्तनञ्च)**

इति जिज्ञासायाम्

**"पापोपशमनं केशनखरोमापमार्जनम् ।**
**हर्षलाघवसौभाग्यकरमुत्साहवर्धनम् ॥"**

– सुश्रुतसंहिता, चिकित्सास्थान २४।७२

**"पौष्टिकं वृष्यमायुष्यं शुचिरूपं विराजनम् ।**
**केशस्मश्रुनखादीनाङ्कर्तनं सम्प्रसाधनम् ॥"**

– चरकसंहिता

**"सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।**
**विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥ (न तस्य तत्)**

– आध्यात्मिकं महत्वम्, देवलः ।

**"मस्तकाभ्यन्तरोपरिष्टात् शिरासम्बन्धिसन्निपातो**
**रोमावर्तोऽधिपतिस्तत्रापि सद्यो मरणम्"**

– शिखारक्षणे वैज्ञानिकं महत्त्वम्, सुश्रुतः ।

१. शिखाधारणात् मस्तकाभ्यन्तरोपरिष्टात् मार्मिकाङ्गानां सुरक्षणं भवति ।

२. केशच्छेदनात् स्वच्छता, सौन्दर्यम्, सौभाग्यकरञ्च ।

## (क) अथ चूडाकर्म । तत्रादौ जूटिकाबन्धनम् ।

तत्र पारस्करः- "सांवत्सरिकस्य चूडाकरणं तृतीये वाऽप्रतिहते" इति । ज्योतिःशास्त्रेषु- "चूडाकर्म तृतीयेब्दे पञ्चमे सप्तमेऽपि वेति" तत्र उपनीत्या सहैव वेति स्मृतिपक्षमादाय विधिर्लिख्यते–

चूडाकर्मदिवसात्पूर्वेह्नि रात्रौ दीपकलशगणेशपूजनपूर्वकं केशाधिवासनं (जूटिकाबन्धनम्) कुर्यात् ।

तद्यथा– पीतवस्त्रखण्डत्रयेषु हरिद्रादूर्वासर्षपाक्षतादिमङ्गलद्रव्याणि क्षिप्त्वा सूत्रेण त्रिगुणेन दृढं बद्ध्वा पोटलिकात्रयं निर्मापयेत् । ततः स्वस्तिवाचनपूर्वकं शुभासन उपविश्याचम्य ब्राह्मणवरणं पुण्याहवाचनं च विधाय गणेशपूजनं कुर्यात् ।

तत्र सङ्कल्पः – अद्येहेत्यादि अमुकोहम् अमुकनाम्नः पुत्रस्य करिष्यमाणचूडाकरणोपयोगि केशलतिकाधिवासनकर्मणि निर्विघ्नतासिद्धये भगवतो गणेश्वरस्य दीपस्य कलशस्य च यथामिलितोपचारैः पूजनं करिष्ये ।

इति सङ्कल्प्य दीपकलशगणेशादीन् सम्पूज्य प्रधानसङ्कल्पं कुर्यात् ।

यथा अद्येहेत्यादि अमुकोऽहं अमुकनाम्नः पुत्रस्य श्वः करिष्यमाणचूडाकर्मसिद्ध्यर्थं केशलतिकाधिवासनं (जूटिकाबन्धनं वा) करिष्ये । इति सङ्कल्प्य ब्रह्मादीन् पूजयेत् ।

तत्र मन्त्राः

**ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽआवः ।**

**सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥**

ॐ ब्रह्मणे नमः ।

**ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः ।**

**स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥**

ॐ विष्णवे नमः ।

**ॐ नमः शम्भवाय च मयो भवाय च नमः ।**

**शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ।**

ॐ शिवाय नमः ।

एवं क्रमेण पोटलिकात्रये ब्रह्माणं विष्णुं शिवं च संपूज्य पोटलिका आदाय एकैकया पोटलिकया एकैकां जूटिकां केशेषु बध्नीयात् । तत्र क्रमः पूर्वं दक्षिणगोदाने (शिरोदक्षिणभागस्थितेषु) केशेषु एकाम्, पश्चिमगोदाने (पश्चिमभागस्थितेषु) द्वितीयाम्, उत्तरगोदाने (उत्तरभागस्थितेषु) तृतीयां, पोटलिकां बद्ध्वा पीतोष्णीषेण वटुशिरो वेष्टयेत् ।

ततो दक्षिणासङ्कल्पः

अद्येहेत्यादि अमुकोऽहं अमुकनाम्नः पुत्रस्य केशाधिवासनकर्मणः साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणेभ्यो दास्ये । ॐ तत्सत् इति दक्षिणां दत्त्वा पोटलिका उष्णीषादिना बद्ध्वा संवेशयेदिति केशाधिवासनम् ।

**चूडाकर्म**

अथ पिता चूडाकर्मदिवसे प्रातरुत्थाय स्वकीयं नित्यकर्म समाप्य गीतवादित्रादिपञ्चघोषपूर्वकं पश्चिमद्वारेण शालां प्रविशेत् । सा च शाला नवग्रहयागे सिद्धैव । तत्र स्वासन उपविश्याचम्य अर्घं सम्पाद्य प्राणायामं विधाय दीपकलशगणेशादीनां मातृणां च पूजां समाप्य चूडाकरणवेदीसमीपमागत्य प्रधानसङ्कल्पं कुर्यात् ।

## (ख) प्रधानसङ्कल्पः

अद्येहेत्यादिदेशकालसङ्कीर्तनान्ते अमुकोऽहममुकनाम्नः कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणेन बलायुर्वर्चोऽभिवृद्धिद्वारा श्रीपरमेश्वरप्रीतये चूडाकर्मसंस्कारं करिष्ये ।

ततो वरणं कुर्यात् ।

(ब्राह्मणानामाचार्यः पितैव **"उपनीय ददद्वेदमाचार्यः स उदाहृत"** इति याज्ञवल्क्यस्मरणात् । पितुरसन्निधाने पितृव्यभ्रात्रादीनामधिकारः क्षत्रियादीनां वेदाध्यापनाभावादन्यो ब्राह्मणोऽधिक्रियते ।)

पुनः सङ्कल्पः–

अद्येहामुकोऽहं अमुकनाम्नः कुमारस्य करिष्यमाणचूडाकर्मणः पूर्वाङ्गत्वेन त्रीन् ब्राह्मणान् भोजयिष्ये । भोजनपर्याप्तं मिष्टान्नं तन्निष्क्रयद्रव्यं वा दास्ये इति त्रिभ्यो ब्राह्मणेभ्यो दद्यात् ।

ततः पिता- शालायां सूक्ष्मबालुकाभिर्मृत्तिकया वा हस्तमात्रं चतुरस्रं चतुरङ्गुलोन्नतं प्रागुदक्प्रवणं स्थण्डिलं निर्मापयेत् । ततोऽङ्गुष्ठकनिष्ठिकाभ्यां गृहीतैस्त्रिभिर्दर्भैः पांसूनपसार्य तानैशान्यां प्रक्षिप्य उदकमिश्रितेन गोमयेन उपलिप्य खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन (काष्ठेन) कुशमूलेन वा प्रादेशदीर्घाः स्थण्डिलपरिमाणा वा प्रागग्रा उदक्संस्थास्तिस्रो रेखाः कृत्वा अनामिकाङ्-गुष्ठाभ्यां प्रतिरेखं यथोल्लेखं पांसूनुदधृत्योर्ध्वं निक्षिप्योदकं स्थण्डिले न्युब्जपाणिनाऽभिषिच्य कांस्यपात्रे निहितं कांस्यपात्रेण पिहितमग्निं स्थण्डिलादाग्नेयभागे निधाय क्रव्यादांशं निर्ऋतिदिशि **"क्रव्यादाय नमः"** इति परित्यज्य स्थण्डिले स्वाभिमुखमग्निं संस्थाप्य अग्न्यानयनपात्रे साक्षतमुदकं प्रक्षिपेत् । ततो माता मङ्गलद्रव्यैः स्नापितं परिधापितनूतनवाससं (अहते वाससी परिधाय) कुमारमङ्के निधाय पत्युर्दक्षिणतोऽग्नेः पश्चादुपविशेत्। ततः पिताग्नेर्दक्षिणस्यां दिशि स्थापिते वारणादियज्ञीयदारुनिर्मितपीठासने प्रागग्रान्कुशानास्तीर्य अग्नेरुत्तरतः प्राङ्मुखमासीनं कर्मतत्त्वज्ञं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मित–मुदङ्मुखमासीनं ब्रह्माणमनुलेपनपुष्पमाल्यवस्त्रादिभिः संपूज्य **"ममामुकनाम्नः कुमारस्य चूडाकर्माहं करिष्ये तदङ्गहोमकर्मणि अमुकगोत्र ! अमुकशर्मन् ! ब्राह्मण त्वं मे ब्रह्मा भव"** इति वृणुयात् । ब्रह्मा च **"भवामि"** इत्युक्त्वाऽग्नेः पूर्वत आगत्य पूर्वस्थापितासनेऽग्नेरभिमुखं ब्रह्माणमुपवेशयेत् ।

ब्रह्मा चेत्कौशस्तदा यजमानस्तमादायाग्नेः पूर्वतो गत्वा पूर्वोपकल्पितासनेऽग्न्यभिमुखं स्थापयित्वेतरथाऽऽवर्तेत । ततो यजमानो वितस्तिमात्रां भुवं विहायाग्नेर्वायव्ये उत्तरे च प्रागग्रकुशै–रासनद्वयं कल्पयित्वा वारणं द्व्यङ्गुलदण्डयुतं दण्डेन सह द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुर–ङ्गुलखातं प्रणीतापात्रं दक्षिणहस्तेन वामहस्ते पूर्वाग्रान्निधाय दक्षिणहस्तोद्धृतपात्रस्थोदकेनात्माऽभिमुखं जलं पूरयित्वा अग्नेर्वायव्यासने निधाय दक्षिणहस्तानामिकयाऽऽलभ्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य उत्तरासने निदध्यात् । ततो बर्हिर्मुष्टिमादाय चतुर्धा विभज्यैकैकेन भागेनाग्नेः पुरस्ताद् दक्षिणतः पश्चादुत्तरश्च प्रागग्रं बर्हिपरिस्तरणं कुर्यात् । प्रयोजनवतः पदार्थान् कार्यक्रमेण द्व्यङ्–गुलविप्रकर्षेण युग्मं युग्ममाज्यस्थाल्यादीनि योग्यानि न्युब्जानि कृत्वाऽऽसादयेत् ॥ तत्र देशविपुलस्थानस्य संभवेऽग्नेरुत्तरतः प्रागग्राणामुदक्संस्थमग्नेः पश्चादुदगग्राणां प्राक्संस्थम् ॥ असम्भवे तु अग्नेः समीपे उदगग्राणां प्राक्संस्थमुदक्संस्थं वेदिपदार्थाश्च- पवित्रच्छेदनानि त्रीणि कुशतरुणानि दृढानि पवित्रे साग्रेऽनन्तर्गर्भे द्वे कुशतरुणे प्रोक्षणीपात्रं वारणं द्व्यङ्गुलदण्डयुतं दण्डेन सह द्वादशाङ्गुलदीर्घं चतुरङ्गुलखातं चतुरङ्-गुलविस्तारं पद्मपत्राकृति कमलमुकुलाकृति वा आज्यस्थाली तैजसी मृण्मयी वा द्वादशाङ्गुलविशाला प्रादेशोच्चा तथैव चरुस्थाली सम्मार्जनकुशास्त्रयः उपयमनकुशास्त्रिप्रभृतयः पञ्चसप्तत्रयोदश वा समिधस्तिस्रः पालाश्याः प्रादेशमात्र्यः स्रुवः खादिरो हस्तमात्रोऽङ्गुष्ठपर्वमात्रखातपरिणाहवर्तुल-पुष्करः, आज्यं गव्यम् । पूर्णपात्रं बहुभोक्तृपुरुषाहारषड्पञ्चाशदधिकद्विशतमुष्टिपरिमिततण्डुलाद्यन्नं

शीतोदकम्, उष्णोदकम् नवनीतपिण्डम्, घृतपिण्डम्, दधिपिण्डम्, त्रिस्थानश्वेतशल्लकीकण्टकम्, प्रादेशमितानि साग्राणि त्रीणि कुशतरुणानि पृथक् बद्धानि नव, ताम्रपरिष्कृतं आयसं क्षुरः, वृषभगोमयपिण्डम्, आचारात्कांस्यपात्रम्, भगिन्यः, नापितः, अशीतिरत्तिकापरिमितं ताम्रपणम् ॥ ततः आसादिते कुशपत्रे गृहीत्वाऽग्रतः प्रादेशमात्रं विहाय तयोरुपरि आसादितानि त्रीणि कुशतरुणानि तिर्यङ्निधाय पवित्रमूलेन पवित्रे प्रदक्षिणमावेष्ट्य त्रयाणां मूलाग्राणि द्वयोर्मूलानि च दक्षिणहस्तेन पवित्रे वामहस्तेन परिगृह्य छित्वा द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् । प्रोक्षणीपात्रं प्रणीताया उत्तरतो निधाय, तत्र प्रणीतोदकं सपवित्रहस्तेन त्रिर्निक्षिप्य तदुदकं पवित्राभ्यां प्रादेशमात्रमूर्ध्वं निक्षिप्य पवित्रे प्रोक्षणीपात्रे निधाय प्रोक्षणीपात्रं दक्षिणहस्तेन वामहस्ते निधाय तदुदकं दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां त्रिरूर्ध्वं निक्षिप्य प्रणीतोदकेन प्रोक्षेत् ॥ इत्थं संस्कृतेन प्रोक्षण्युदकेनासादितानि न्युब्जान्युत्तानानि कृत्वा आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तान्येकैकशस्त्रिः प्रोक्ष्य असञ्चरे (प्रणीताग्न्योरन्तराले) प्रोक्षणीपात्रं निदध्यात् ॥ ततः आज्यस्थालीमग्नेः पश्चान्निधाय तत्रासादितमाज्यमात्माभिमुखं प्रक्षिप्य, ततो ब्रह्माऽऽज्यस्थालीमारोप्य ज्वलदुल्मुकम् आज्योपरि समन्तादैशानीमारभ्य प्रदक्षिणं भ्रामयित्वाऽऽग्नौ प्रक्षिप्य, उदकं स्पृष्ट्वा इतरथाहस्तमावर्तयेत् ॥ ततो यजमानो दक्षिणहस्तेन स्रुवमादाय पूर्वाग्रमधोमुखमग्नौ तापयित्वा वामेपाणावुत्तानमुखं निधाय दक्षिणहस्तमध्यधृतानां संमार्जनकुशानामग्रैर्मूलतोऽग्रपर्यन्तं मूलैरग्रतो मूलपर्यन्तं संमृज्य संमार्जनकुशानुत्तरतो निरस्य प्रणीतोदकेन न्युब्जपाणिनाऽभ्युक्ष्य पुनः पूर्ववत् प्रतप्य उदकं स्पृष्ट्वा दक्षिणतः स्वसमीपे निदध्यात् ॥ तत आज्यमुत्थाप्य चरोः पूर्वेण नित्वाऽग्नेरुत्तरतः प्रोक्षणीपात्रस्य पश्चाद्भागे स्थापयित्वा ततोऽग्नेः पश्चादानीय पवित्राभ्यां किञ्चिदाज्यं प्रादेशमात्रमूर्ध्वं क्षिप्त्वाऽऽज्यमवलोक्य अपद्रव्ये सति तन्निरस्य प्रोक्षणीश्च पूर्ववदुत्पूय प्रोक्षणीषु पवित्रे निदध्यात् । उपयमनकुशान् दक्षिणपाणिना वामपाणौ निधाय पूर्वमासादितास्तिस्रः समिध आदाय उत्थायाग्नौ प्रक्षिप्य दक्षिणचुलुकगृहीतेन सपवित्रेण प्रोक्षण्युदकेनाग्निमीशानाद्युदक्पर्यन्तं परिषिच्य हस्तमितरथावर्त्य पवित्रे प्रणीतासु निदध्यात् ॥ ततो यजमान आघारादि चतुर्दशाहुतिषु संस्रवधारणाय पात्रमग्निप्रणीतापात्रयोर्मध्ये निधाय ब्रह्मणा कुशेन दक्षिणबाहौ यथासंभवमन्वारब्धः पातितदक्षिणजानुः सोपयमनकुशं वामहस्तं हृदये निधायोत्तानेन शङ्खाकारेण हस्तेन मध्यधृतेन स्रुवेणाऽऽज्यं जुहुयात् ।

**ॐ प्रजापतय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता**

**आज्यहोमे विनियोगः** ॥

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम** ॥

प्रजापतिं मनसा ध्यात्वा, अग्नेरुत्तरभागे प्राञ्चमृजुमूर्ध्वं दीर्घं संततमाघारादित्यागान्ते किञ्चित्स्रुवावशिष्टमाज्यम् अवशिष्टसंस्रवधारणपात्रे प्रक्षिपेत् । एवमुत्तरत्रयोदशाहुतिषु संस्रवधारणम् । सर्वत्र त्यागान्ते द्रव्यप्रक्षेपः ।

**ॐ इन्द्रायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता आज्यहोमे विनियोगः** ।

**ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम** ।

अग्नेर्दक्षिणभागे पूर्ववदुत्तराघारं जुहुयात् ।

इत्याघारौ । समिद्धतेऽग्निप्रदेशे ।

**ॐ अग्नय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः ।**

**ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ १ ॥**

**ॐ सोमायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता आज्यहोमे विनियोगः ।**

**ॐ सोमाय स्वाहा । इदं सोमाय न मम ॥ २ ॥**

एतावाज्यभागौ ।

**ॐ भूर्भुवः स्व इति महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवता आज्यहोमे विनियोगः ॥**

**ॐ भूः स्वाहा । इदमग्नये न मम ॥**

**ॐ भुवः स्वाहा । इदं वायवे न मम ॥**

**ॐ स्वः स्वाहा । इदं सूर्याय न मम ॥**

## (ग) सर्वप्रायश्चित्तहोमः

ॐ त्वन्नो अग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः ।

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ।**

**यजिष्ठो वह्नितमः शोशुचानो विश्श्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ।**

इदमग्नीवरुणाभ्यां न मम ।

ॐ सत्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः ।

**ॐ सत्वन्नोऽअग्नेऽवमो भवोती नेदिष्टोऽअस्याऽउषसो व्युष्टौ ।**

**अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि स्वाहा ।**

इदमग्नीवरुणाभ्यां न मम ।

ॐ अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः ।

**ॐ अयाश्चाग्नेस्यनभिशस्ति पाश्च सत्यमित्वमयाऽअसि ।**

**अया नो यज्ञं वहास्यया नो धेहि भेषजꣳस्वाहा ।**

इदमग्नये न मम ।

ॐ ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणसवितृविष्णुर्विश्वेदेवा मरुतः स्वर्का देवता प्रायश्चित्तहोमे विनियोगः ।

**ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।**

**तेभिर्न्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥**

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यो स्वर्केभ्यः न मम ।

ॐ उदुत्तममिति शुनःशेफऋषिस्त्रिष्टुप्छन्दो वरुणोदेवता पाशान्मोचने विनियोगः ।

**ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय ।**

**अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥**

इदं वरुणाय न मम ।

**ॐ अग्नये प्रजापतये स्वाहा** । इदमग्नये प्रजापतये न मम ।

**ॐ अग्नये स्विष्टकृते स्वाहा** । इदमग्नये स्विष्टकृते न मम ।

ततः संस्रवं प्राश्याचम्य पवित्राभ्यां मुखं मार्जयित्वा पवित्रे अग्नौ क्षिपेत् । ततो ब्रह्मणे पूर्णपात्रदानम् -

अद्येहाऽमुकनाम्नः कुमारस्य चूडाकर्माङ्गहोमकर्मणः साङ्गफलप्राप्तये साद्गुण्यार्थम् इदं पूर्णपात्रं ससुवर्णं ब्रह्मणे तुभ्यमहं संप्रददे ।

ततो यजमानः ॐ सुमित्रिया दुर्मित्रिया इति मन्त्रद्वयस्य प्रजापतिर्ऋषिरापो देवता प्रणीता विमोके विनियोगः ।

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु** । इति मन्त्रेण प्रणीतोदकेन शिरः सम्मृज्य ।

**ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यञ्च वयं द्विष्मः** । इति मन्त्रेण । प्रणीतापात्रमैशान्यां न्युब्जीकुर्यात् । तत आस्तरणक्रमेण बर्हिरुत्थाप्याऽज्येनाभिघार्य-

ॐ देवा गातुविद इति मनसस्पतिर्ऋषिर्विराट् छन्दो वातो देवता बर्हिर्होमे विनियोगः ।

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित** ।

**मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वातेधाः** ॥

इति जुहुयात् । इति बर्हिर्होमः ।

## (घ) लग्नात्सर्वारिष्टगोदानम्

तत्र सङ्कल्पः

अद्येहामुकनाम्नः कुमारस्य चूडाकर्मलग्नाद्यत्रकुत्रस्थानस्थितानाम् आदित्यादिनवग्रहाणां

दुष्टानां दुष्टफलोपशान्तये शुभानां विशेषतः शुभफलप्राप्तये इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा ब्राह्मणाय दातुमहमुत्सृजे ।

## (ङ) शीतोदके उष्णोदकाऽऽसेचनम्

ततः उपकल्पितपात्रे शीतासु अप्सु उष्णा आप आसिञ्चति अनेन मन्त्रेण -

उष्णेनवाय इति मन्त्रस्य परमेष्ठी ऋषिः प्रतिष्ठाछन्दो लिङ्गोक्ता देवता उष्णोदकासेके विनियोगः ।

**ॐ उष्णेनवायऽउदकेनेह्यदिते केशान्वप** इति ।

ततो मिश्रितास्वप्सु तूष्णीं नवनीतपिण्डं घृतपिण्डं दधिपिण्डं वा प्रक्षिपति । तत अप आदाय पूर्वमधिवासितं दक्षिणं गोदानमुन्दति (क्लेदयति, आर्द्रीकरोतीत्यर्थः ) तत्र मन्त्रः

सवित्रेति मन्त्रस्य प्रजापतिर्ऋषिर्गायत्रीछन्द आपो देवता उन्दने विनियोगः ।

**ॐ सवित्रा प्रसूता दैव्याऽआपऽउन्दन्तु ते तनून्दीर्घायुत्वाय वर्च्चसे** ।

*॥ इति ॥*

## (च) शलल्या केशानां पृथक् करणम्

ततस्त्रेण्या शलल्या तूष्णीं छेत्तुमिष्टान्केशान्विनीय (पृथक् कृत्य) तेष्वेव केशेषु कुशतरुणान्यन्तर्दधाति ।

## (छ) कुशतरुणान्तर्धानम्

तत्र मन्त्रः

ओषध इति प्रजापतिर्ऋषिर्यजुश्छन्द ओषधिर्देवता कुशतरुणान्तर्द्धाने विनियोगः ।

**ॐ ओषधे त्रायस्व स्वधिते मैनꣳहिꣳसीः ।**

इति सकुशतरुणान् केशान्सव्यहस्ते धृत्वा दक्षिणहस्तेन क्षुरमादत्ते ।

## (ज) क्षुरग्रहणम्

तत्र मन्त्रः

शिवोनामेति प्रजापतिर्ऋषिर्यजुश्छन्दः क्षुरो देवता क्षुरग्रहणे विनियोगः ।

**ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा माहिꣳसीः ।**

*॥ इति ॥*

## (झ) क्षुरेण केशच्छेदनम्

ततः सकुशतरुणेषु केशेषु क्षुरं प्रवपति (निदधाति संलग्नीकरोतीत्यर्थः) । तत्र मन्त्रः

निवर्तयामीति प्रजापतिर्ऋषिर्यजुश्छन्दः क्षुरो देवता क्षुरकेशसंयोगे विनियोगः ।

**ॐ निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ।**

*॥ इति ॥*

## (ञ) छिन्नानां केशानाम् आनडुहे गोमयपिण्डे निक्षेपणम्

ततस्तान्केशान्क्षुरेण च्छिनत्ति । अनेन मन्त्रेण-

येनावपदिति आलम्बायन ऋषिः पङ्क्तिश्छन्दः सविता देवता सकेशकुशपत्रच्छेदने विनियोगः।

**ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन ब्रह्माणो वपतेदमस्यायुष्यञ्जरदष्टिर्यथाऽसत्** । । इति च्छिन्द्यात् ।

इति सकेशानि कुशतरुणानि प्रच्छिद्य उत्तरतो ध्रियमाणे आनडुहे गोमयपिण्डे निक्षिपेत्। एवमेवापरं वारद्वयम् उन्दनं शल्लकीकण्टकेन केशविनयनं कुशतरुणान्तर्धानं क्षुरादानं क्षुरकेशसंयोजनं सकेशकुशपत्रच्छेदनं गोमयपिण्डे प्रासनं च तूष्णीं कुर्यात् ।

(तत्र विशेषः- पिता सकेशानि पिञ्जुलानि च्छित्वा प्रागग्राणि शिशुमातृहस्ते निदधाति तानि प्रागग्राण्यानडुहे गोमयपिण्डे निदधाति ।)

अथ पश्चिमगोदाने उन्दनं विनयनं कुशतरुणान्तर्धानं क्षुरादानं क्षुरकेशसंयोगश्च पूर्वोक्तैरेवमन्त्रैः कुर्यात्। छेदने मन्त्रविशेषः

ॐ त्र्यायुषमिति नारायणऋषिरनुष्टुप्छन्दोऽग्निर्देवता सकेशकुशपत्रच्छेदने विनियोगः ।

**ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम्** ॥

इति छित्वा ॥ पूर्ववद्गोमयपिण्डे निदध्यात् ।

एवं पुनर्वारद्वयं इतरयोः पश्चिमगोदानयोः उन्दनं विनयनं कुशतरुणान्तर्धानं क्षुरादानं प्रवपनं गोमये प्रासनं च तूष्णीं कुर्यात् ।

तथोत्तरगोदाने- उन्दनविनयनकुशतरुणान्तर्धानक्षुरादानप्रवपनानि पूर्ववत्कुर्यात् । छेदने तु मन्त्रविशेषः

**येनेति प्रजापतिर्ऋषिर्यजुश्छन्दः क्षुरो देवता सकेशकुशपत्रच्छेदने विनियोगः ।**

**ॐ येन भूरिश्चरा दिवं योक्च पश्चाद्धि सूर्यम् ।**

**तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये ।**

इति मन्त्रेण छित्वा गोमये प्रासनं पूर्ववत् । एवं पुनर्वारद्वयं इतरयोरुत्तरगोदानयोः उन्दनं विनयनं कुशतरुणान्तर्धानं क्षुरादानं छेदनं गोमये प्रासनं च तूष्णीं कुर्यात् । अथ "त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति" शिरसः समन्तात्प्रदक्षिणं क्षुरं परिभ्रामयतीत्यर्थः । सकृन्मन्त्रेण द्विस्तूष्णीम्, तत्र मन्त्रः

**यत्क्षुरेणेति वामदेवऋषिर्यजुश्छन्दः क्षुरोदेवता क्षुरपरिभ्रामणे विनियोगः ।**

**ॐ यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति ।**

**केशाञ्छिन्धि शिरो माऽस्यायुः प्रमोषीः ॥**

*॥ इति ॥*

अथोन्दनशेषेण जलेन सर्वं शिर आर्द्रीकृत्य नापिताय क्षुरं प्रयच्छति । **"अक्षण्वन् परिवपेति"** । अक्षुण्वन्निति वामदेवऋषिर्यजुश्छन्दः क्षुरोदेवता क्षुरप्रदाने विनियोगः ।

**ॐ अक्षुण्वन् परिवप** इति । परिवपामीति नापितो वदेत् । अथ यथाकुलाचारं शिखावर्जं वपनं कृत्वा ततः सकेशं गोमयपिण्डं पल्वले गोष्ठे उदकान्ते वा निधापयेत् ।

## (ट) स्नानम्

ततः सुस्नातं पर्युप्तशिरसं माणवकं आचार्यसमीपमानीय अग्नेः पश्चादवस्थापयेत् ।

अथ पिता स्वाचार्याय वरं ददाति कुमारस्याचार्याभावात् ।

## (ठ) दक्षिणादानम्

अद्येहेत्यादि अमुकनाम्नः कुमारस्य चूडाकर्माङ्गहोमकर्मणः चूडाकर्मणश्च साङ्गफलप्राप्तये साद्गुण्यार्थं च इदं सुवर्णमग्निदैवतं तन्निष्क्रयभूतं द्रव्यं वा आचार्याय तुभ्यमहं सम्प्रददे ।

ॐ तत्सन्नमेति सङ्कल्प्य दद्यात् । आचार्यश्च मन्त्राशिषं दद्यात् ॥

*॥ इति चूडाकर्म ॥*

अष्टमः पाठः

# (अ) अथोपनयनम्

तत्र पारस्करसूत्रम्–

**अष्टवर्षं ब्राह्मणमुपनयेत्। गर्भाष्टमे वा, एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम्।** **(एतद्द्विगुणितवर्षपर्यन्तं गौण उपनयनकालः) तदूर्ध्वं पतितसावित्रिकाः (व्रात्याः संस्कारहीनाः) भवन्ति ।**

तत्रोपनेता कुमारः स्वस्योपनेतृत्वसिद्धये प्रथमं प्रायश्चित्तं कुर्यात्।

## (क) प्रायश्चित्तम्

तत्र सङ्कल्पः

अद्येहेत्यादि अमुकोऽहं स्वस्योपनेतृत्वयोग्यतायै कृच्छ्रत्रयगोत्रितयनिष्क्रयीभूतं सुर्वणं वह्निदैवतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दास्ये। तथोपनेयोऽपि प्रायश्चित्तसङ्कल्पं कुर्यात्।

अद्येहेत्यादि अमुकोऽहं ममकामाचार-कामवाद-कामभक्षादिदोषापनोदनद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वस्योपनेयत्वयोग्यतायै च कृच्छ्रत्रयगोत्रितयनिष्क्रयीभूतं सुवर्णं वह्निदैवतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दास्ये। ॐ तत्सन्न ममेति दद्यात्।

## (ख) प्रधानसङ्कल्पः[२○]

ॐ तत्सत् अद्येहेत्यादि अमुकशर्म्माऽहम् अमुकनाम्नोऽस्य कुमारस्य बीजगर्ब्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदाध्ययनादिकर्म्माधिकारसम्पादकद्विजत्वसंसिद्धिकाम उपनयनाख्यं कर्म करिष्ये। तत्पूर्वाङ्गत्वेन त्रीन्ब्राह्मणान्सहानेन वटुना भोजयिष्ये। इति सङ्कल्प्य ब्राह्मणान्भोजयित्वा तैः सह कुमारं च भोजयेत्। अथाचार्यो ब्रह्मोपवेशनादि बर्हिर्होमान्तं कर्म विदध्यात्। परिस्कृतभूमौ बालुकामृत्तिकादिभिर्हस्तमात्रं चतुरस्रं चतुरङ्गुलोन्नतं प्रागुदक्प्रवणं स्थण्डिलं रचयेत्। तत्र **समुद्भवनामाग्निं** स्थापयेत्[३♦]।

अथ पर्युप्तशिरसं कुमारं मङ्गलद्रव्यैः स्नापयित्वा वेदगीतवादित्रघोषपुरस्सरं प्रदक्षिणमग्निं परिक्रममाणमाचार्यसमीपमानयन्त्याचार्यपुरुषाः। अथाचार्यो माणवकं स्वस्य दक्षिणतोऽग्नेः पश्चात् प्राङ्मुखमुपवेश्य "**ब्रह्मचर्यमागाम्**" ब्रूहि, इति ब्रूयात्।

"**ॐ ब्रह्मचर्यमागाम्**" इति माणवको वदेत्। पुनराचार्यः "**ब्रह्मचार्यसानि**" इति प्रेषयति। माणवकोऽपि "**ब्रह्मचार्यसानि**" इति ब्रूयात्। अथाचार्यो माणवकं धौतं (कौपीनं) वासः परिधापयति। वक्ष्यमाणमन्त्रेण।

## (ग) वासः परिधापनम्

२ ○ अथाचार्यः पिता उपनयनवेदीसमीपमागत्य वेद्यां पञ्चभूसंस्कारपूर्वकं समुद्भवनामाग्निमावाह्य संस्थाप्य प्रधानसङ्कल्पं कुर्यात्।

३ ♦ तत्र क्रमः दर्भैस्त्रिः परिसमूह्य, गोमयोदकेन त्रिरुपलिप्य स्रुवेण त्रिरुल्लिख्य अनामिकांगुष्ठाभ्यां त्रिरुद्धृत्य, जलेनाभ्युक्ष्य, कांस्यपात्रे निहितं कांस्यपात्रेण पिहितमग्निमादाय वेद्यां स्वाभिमुखमग्निं संस्थाप्य, अग्न्यानयनपात्रे साक्षतमुदकं क्षिपेत्।

येनेन्द्रायेत्यङ्गिरा ऋषिर्बृहतीछन्दो बृहस्पतिर्देवता वासः परिधापने विनियोगः।

**ॐ येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम्** ।

**तेन त्वा परिदधाम्यायुषे दीर्घायुष्ट्वाय बलाय वर्चसे** ।

इत्याचार्यस्यैव मन्त्रपाठः परिदधामीति मन्त्रलिङ्गात् । अत्र द्विराचमनम् । शूद्रेण हि समस्तावद्यावद्वेदे न योजितः । उपनेयस्य माणवकस्य द्विरपप्राशनम् । ततः

## (घ) मेखलाबन्धनम्

अथ मेखलां बध्नीते अनेन मन्त्रेण ।

इयं दुरुक्तमिति वामदेवऋषिस्त्रिष्टुप्छन्दो मेखला देवता मेखलाबन्धने विनियोगः ।

**ॐ इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती मऽआगात्** ।

**प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम्** ।

अथवा

**ॐ युवा सुवासाः परिवीतऽआगात्स उ श्रेयान् भवति जायमानः** ।

**तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः** ॥

इति वा तूष्णीं वा ।

इति मन्त्रं पठतो माणवकस्य कटिप्रदेशे मेखलां त्रिरावेष्टच तृतीयवेष्टने प्रवरसङ्ख्यया ग्रन्थीन्करोति । माणवकस्यैव मन्त्रपाठः ।

मऽआगादिति मन्त्रलिङ्गात् । तत्र मेखला च- मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला । धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्येति क्रमेण सूत्रोक्ता ग्राह्याः । अत्रावसरे प्रणवपूर्वया गायत्र्या शिखाबन्धनं कुर्यात् । यद्यप्यत्र यज्ञोपवीतदानधारणे सूत्रकारेण नोपादिते तथापि **"विभृयाद्दण्डकौपीनोपवीताजिनमेखलाः"** इति व्यासवचनात्ते धार्ये अवसरेऽस्याप्यौचित्यान्मेखलाबन्धनानन्तरमेकं यज्ञोपवीतं धारयेत् ।

## (ङ) अथाचाराद्यज्ञोपवीताष्टकदानम्

कुमारः शिखाबन्धनमाचमनञ्च कृत्वा तण्डुलपरिपूरितेष्वष्टसु पात्रेषु कांस्यभाण्डेषु फलं यज्ञोपवीतं च निधाय देयब्राह्मणान् संपूज्य कुशमादाय- देशकालकीर्तनान्तेऽमुकगोत्रस्यामुकशर्मणो मम द्विजाचारप्राप्त्यर्थं तण्डुलपूर्णपात्रस्थानि सफलानि यज्ञोपवीतानि ब्रह्मदैवतानि नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे । इत्यष्टाभ्यो दत्वा दक्षिणामादाय- कृतस्य यज्ञोपवीताष्टकदानस्य प्रतिष्ठार्थं दक्षिणां ताम्रं सूर्यदैवतं व्यवहारोपकल्पितं द्रव्यं विष्णुदैवतं वा यथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे । इत्युक्त्वा दद्यात् ।

## (च) यज्ञोपवीतधारणम्

यज्ञोपवीतं धारयेदनेन मन्त्रेण

यज्ञोपवीतमिति परमेष्ठी ऋषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवता श्रौतस्मार्त्तकर्मानुष्ठानसिद्धये यज्ञोपवीतधारणे विनियोगः।

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्** ।

**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः** ।

**ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि** ।

एवं मन्त्रं पठतो माणवकस्य दक्षिणं बाहुमुद्धृत्य वामांसोपरि निदध्यात् । तत्र आचमनद्वयं माणवकस्य । ततः प्रदक्षिणमग्निं परीत्य माणवकोऽग्नेः पश्चात्स्थित्वा आचमनं कृत्वा स्ववर्णोक्तम् ऐणेयादि चर्म यज्ञोपवीतवत्परिदध्यात् ।

## (छ) मृगचर्मधारणम्

तत्र मन्त्रः

मित्रस्य चक्षुरिति वामदेवऋषिस्त्रिष्टुप्छन्दः अजिनं देवता अजिनधारणे विनियोगः।

**ॐ मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳसमिद्धम्** ।

**अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेऽहम्** ।

इति मन्त्रेण ऐणेयं ब्राह्मणः रौरवं क्षत्रियः अज(बस्त)चर्म्म वैश्यः परिदध्यात् । अथाचार्यः पादादिकेशप्रमाणं स्ववर्णोक्तं पालाशबैल्वौदुम्बरजातं दण्डं तत्तद्वर्णाय माणवकाय प्रयच्छति ।

स च मन्त्रेणादत्ते ।

## (ज) दण्डग्रहणम्

यो मे दण्ड इति प्रजापतिर्ऋषिः यजुश्छन्दः दण्डो देवता दण्डग्रहणे विनियोगः ।

**ॐ यो मे दण्डः परापतद्वैहायसोऽधिभूम्याम्** । **तमहं पुनराददऽआयुषे ब्रह्मणे ब्रह्मवर्चसाय** ॥ इति मन्त्रेण प्रतिगृह्णाति ।

(दिक्षावदेके दीर्घसत्रमुपैतीति) वचनात् उच्छ्रयति च उच्छ्रयस्वेति ।

उच्छ्रयस्वेति प्रजापतिर्ऋषिः यजुश्छन्दो दण्डोदेवता दण्डोच्छ्रयणे विनियोगः ।

**ॐ उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा पाह्यꣳहऽसऽआस्य यज्ञस्योदृचः** ।

अथाचार्यः अद्भिः स्वाञ्जलिं जलेनापूर्य तेन माणवकाञ्जलिं वारत्रयं पूरयति ।

## (झ) अञ्जलिपूरणम्

अपो हि ष्ठेत्यादितिसृणां सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता माणवकाञ्जलिपूरणे विनियोगः ।

**ॐ आपो हिष्ठा मयो भुवस्ता नऽऊर्ज्जे दधातन** । **महे रणाय चक्षसे** ॥ १ ॥

इति प्रथमवारं पूरयेत् । कुमारश्चोर्ध्वमुत्क्षिपेत् ।

**ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः** । **उशतीरिव मातरः** ॥ २ ॥

इति द्वितीयवारं पूरयेत् ।

**ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ३ ॥**

इति तृतीयवारं पूरयेत् ।

अथाचार्यो माणवकं प्रति सूर्यमुदीक्षस्वेति प्रैषं ददाति ।

माणवकश्च सूर्यमुदीक्षन् ।

### (ञ) सूर्यावलोकनम्

तच्चक्षुरिति दध्यङ्ङाथर्वणऋषिरुष्णिक्छन्दः सूर्यो देवता सूर्योदीक्षणे विनियोगः ।

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः**
**शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः श्याम शरदः शतम्भूयश्च शरदः शतात् ।**

इति सूर्यं पश्येत् ।

अथाचार्यो माणवकस्य दक्षिणांसोपरि स्वदक्षिणं हस्तं नीत्वा हृदयमालभते अनेन मन्त्रेण ।

### (ट) हृदयालम्भनम्

मम व्रते ते इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवता हृदयालम्भने विनियोगः ।

**ॐ मम व्रते ते हृदयं दधामि । मम चित्तमनुचित्तं ते अस्तु ।**
**मम वाचमेकमना जुषस्व । बृहस्पतिष्ट्वा नियुनक्तु मह्यम्** ॥ इति ॥

अथाचार्यो माणवकस्य साङ्गुष्ठं दक्षिणहस्तं गृहीत्वा **"को नामासि"** एवं पृष्टः कुमारः **"अमुकशर्माहं भो ३"** इति प्रत्याह । पुनराचार्यो माणवकं पृच्छति **"कस्य ब्रह्मचार्यसि" "भवतः"** इति माणवकेनोच्यमाने-इन्द्रस्येति प्रजापतिर्ऋषिः यजुश्छन्दः लिङ्गोक्ता देवता पाठे विनियोगः ।

**ॐ इन्द्रस्य ब्रह्मचार्यस्याग्निराचार्यस्तवाहमाचार्यस्तव अमुकशर्म्मन् ३ ।**

इति आचार्यः पठेत् ।

अथैनं कुमारं भूतेभ्यः परिददत्याचार्यः ।

### (ठ) रक्षणम्

प्रजापतये त्वेति प्रजापतिर्ऋषिः षट्यजूंषि लिङ्गोक्ता देवता रक्षणे विनियोगः ।

**ॐ प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधिभ्यः परिददामि द्यावापृथिवीभ्यान्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ।**

*॥ इति ॥*

अथ कुमारोऽग्निं प्रदक्षिणं परीत्य आचार्यस्योत्तरत उपविशति । अथाचार्यो ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कुर्यात् । अग्नेर्दक्षिणस्यां दिशि स्थापिते वारणादियज्ञीयदारुनिर्मिते पीठासने प्रागग्रान् कुशानास्तीर्य अग्नेरुत्तरतः

प्राङ्मुखमासीनं कर्मतत्त्वज्ञं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितमुदङ्मुखमासीनं ब्रह्माणमनुलेपनपुष्प-माल्यवस्त्रादिभिः सम्पूज्य अमुकगोत्रस्यामुकशर्मणो मम अमुकनाम्नः कुमारस्य उपनयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिश्चन्दनाक्षत-पुष्पपूगीफलादिभि-र्ब्रह्मत्वेन त्वामहं वृणे। इति वृणुयात्॥ ब्रह्मा च **वृतोऽस्मि** इत्युक्त्वा अग्नेः पूर्वेणागत्य पूर्वस्थापिते आसनेऽग्न्यभिमुखमुपविशेत्। ततः पिता वितस्तिमात्रं भुवं विहायाग्नेर्वायव्ये उत्तरत्र च प्रागग्रैः कुशैरासनद्वयं कल्पयित्वा प्रणीतापात्रं दक्षिणहस्तेन वामहस्ते पूर्वाग्रं निधाय दक्षिणहस्तोद्धृतपात्रस्थोदकेनात्माभिमुखं पूरयित्वाऽग्नेर्वायव्यासने निधाय दक्षिणहस्तानामिकयाऽऽलभ्यः कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य उत्तरासने निदध्यात् । ततो बर्हिषो मुष्टिमादायाग्नेः पुरस्तात्पूर्वाग्रैरुदक्संस्थं दक्षिणतः प्रागग्रैरुदक्संस्थं पश्चात्प्रागग्रैरुदक्संस्थमुत्तरतः प्रागग्रैरुदक्संस्थं बर्हिभिः परिस्तरणं कुर्यात्॥ अग्निसमीपे उदगग्राः प्राक्संस्थाः प्रयोजनवन्तः पदार्थाः स्थाप्याः, पवित्रच्छेदनार्थानि त्रीणि कुशतरुणानि, पवित्रे साग्रेऽनन्तर्गर्भे कुशपत्रे द्वे, प्रोक्षणीपात्रम्, आज्यस्थाली, संमार्जनकुशास्त्रयः, उपयमनकुशास्त्रयोदश, समिधस्तिस्रः प्रादेशमात्र्यः पालाश्यः, स्रुवः, आज्यं गव्यं, पूर्णपात्रं, समिन्धनकाष्ठानि दश, तिस्रः पालाश्यः समिधः, पर्युक्षणार्थमुदकं, भिक्षापात्रं चोपकल्प्य, तत आसादितं कुशपत्रं गृहीत्वा, अग्रतः प्रादेशमात्रं विहाय, तयोरुपरि आसादितानि त्रीणि कुशतरुणानि तिर्यङ्निधाय, पवित्रमूलेन पवित्रे प्रदक्षिणमावेष्टच, त्रयाणां मूलाग्राणि द्वयोर्मूलानि च दक्षिणहस्तेन पवित्रे वामहस्तेन परिगृह्य छित्वा द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् ॥ ततः प्रोक्षणीपात्रं प्रणीताया उत्तरतो निधाय तत्र प्रणीतोदकं सपवित्रहस्तेन त्रिर्निक्षिप्य, तदुदकं पवित्राभ्यां प्रादेशमात्रमूर्ध्वं क्षिप्त्वा, पवित्रे प्रोक्षणीपात्रे निधाय प्रोक्षणीपात्रं दक्षिणहस्तेन वामहस्ते निधाय तदुदकं दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां त्रिरूर्ध्वोर्ध्वं क्षिप्त्वा प्रणीतोदकेन प्रोक्षेत् ॥ इत्थं संस्कृतेन प्रोक्षण्युदकेनाऽऽसादितानि न्युब्जानि पात्राणि उत्तानीकृत्य आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तान्येकैकशस्त्रिः प्रोक्ष्यासञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निदध्यात् ॥ तत आज्यस्थालीमग्नेः पश्चान्निधाय, तत्र आसादितमाज्यमात्माभिमुखं प्रक्षिप्य, तत आज्यस्थालीमग्नावारोप्य, ज्वलदुल्मुकमाज्यस्योपरि समन्तादीशानीमारभ्य प्रदक्षिणं भ्रामयित्वाग्नौ प्रक्षिप्योदकं स्पृष्ट्वेतरथाहस्तमावर्त्तयेत् ॥ ततः पिता दक्षिणहस्तेन स्रुवमादाय पूर्वाग्रमधोबिलमग्नौ तापयित्वा वामे पाणावुत्तानबिलं निधाय दक्षिणहस्तधृतमध्यानां संमार्जनकुशानामग्रैर्मूलतोऽग्रपर्यन्तं, मूलैरग्रतो मूलपर्यन्तं संमृज्य, संमार्जनकुशानुत्तरतो निरस्य, प्रणीतोदकेन न्युब्जपाणिनाभ्युक्ष्य, पुनः पूर्ववत्प्रतप्योदकं स्पृष्ट्वा दक्षिणतः स्वसमीपे कुशोपरि निदध्यात् ॥ तत आज्यमुत्थाप्य प्रथमतोऽग्नेरुत्तरतः प्रोक्षणीपात्रस्य पश्चाद्भागे स्थापयित्वा, ततोऽग्नेः पश्चादानीय पवित्राभ्यां किञ्चिदाज्यं प्रादेशमात्रमूर्ध्वं क्षिप्त्वा, आज्यमवलोक्यापद्रव्ये सति तन्निरस्य, प्रोक्षणीश्च पूर्ववदुत्पूय, प्रोक्षणीषु पवित्रे निदध्यात् ॥ उपयमनकुशान् दक्षिणपाणिना वामपाणौ निधाय, पूर्वमासादितास्तिस्रः समिध आदायोत्थायाग्नौ प्रागग्राः प्रक्षिप्य, दक्षिणचुलुकगृहीतेन सपवित्रेणाशेषेण प्रोक्षण्युदकेनाग्निमीशानाद्युदक्पर्यन्तं परिषिच्य हस्तमितरथावर्त्य, पवित्रे प्रणीतासु निदध्यात् ॥ ततः पिता आघारादिचतुर्दशाहुतिषु संस्रवधारणाय पात्रमग्निप्रणीतापात्रयोर्मध्ये निधाय, ब्रह्मणा कुशेन दक्षिणे बाहौ अन्वारब्धः पातितदक्षिणजानुः उपयमनकुशान् वामहस्ते निधायोत्तानेन दक्षिणहस्तेन शङ्खमुद्रया मध्यमूलयोर्मध्ये धृतेन स्रुवेणाज्याहुतिर्जुहुयात् ।

**ॐ प्रजापतय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम** (इति मनसा) ।

अग्नेरुत्तरभागे प्राञ्चमृजुमूर्ध्वं सन्तताघारं पूर्वाघारं हुत्वाऽवशिष्टं संस्रवं पात्रे निक्षिपेत् ।

**ॐ इन्द्रायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता आज्यहोमे विनियोगः ।**

**ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम ।**

अग्नेर्दक्षिणभागे पूर्ववदुत्तराघारं जुहुयात् ।

**ॐ अग्नय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः ।**

**ॐ अग्नये स्वाहा । इदमग्नये न मम ।**

इत्याग्नेयमाज्यभागमुत्तरार्धपूर्वार्धे समिद्धतमे वाग्निप्रदेशे सर्वत्र जुहुयात् ।

**ॐ सोमायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमोदेवता आज्यहोमे विनियोगः ।**

**ॐ सोमाय स्वाहा । इदं सोमाय न मम ।**

इति सौम्यमाज्यभागं दक्षिणार्धपूर्वार्धे जुहुयात् ।

**ॐ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवता आज्यहोमे विनियोगः ।**

**ॐ भूः स्वाहा । इदमग्नये न मम ।**

**ॐ भुवः स्वाहा । इदं वायवे न मम ।**

**ॐ स्वः स्वाहा । इदं सूर्याय न मम ॥**

**ॐ त्वन्नोऽअग्न इति मन्त्रस्य वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते आज्यहोमे विनियोगः ।**

**ॐ त्वन्नोऽअग्नेवरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ।**

**यजिष्ठोवह्नितमः शोशुचानोविश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा ।**

**इदमग्नीवरुणाभ्यां न मम ।**

**ॐ सत्वन्नोऽअग्न इति मन्त्रस्य वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते आज्यहोमे विनियोगः ।**

**ॐ सत्वन्नोऽअग्ने वमो भवोती नेदिष्टोऽअस्याऽउषसो व्युष्टौ ।**

**अवयक्ष्व नो व्वरुणꣳरराणोव्वीहि मृडीकꣳसुहवो नऽएधि स्वाहा ॥**

**इदमग्नीवरुणाभ्यां न मम ।**

**ॐ अयाश्चाग्न इति मन्त्रस्य वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः ।**

**ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि ।**

**अया नो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा ॥**

**इदमग्नये न मम ।**

**ॐ येतेशतमिति मन्त्रस्य वामदेव ऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवता आज्यहोमे विनियोगः ।**

**ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।**

**तेभिर्नोऽअद्य सवितोतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥**

**इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम ।**

**ॐ उदुत्तममिति मन्त्रस्य शुनःशेपऋषिस्त्रिष्टुप्छन्दो वरुणो देवता आज्यहोमे विनियोगः ।**

**ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय ।**

**अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥**

**इदं वरुणाय न मम ।**

**ॐ प्रजापतय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता**

**आज्यहोमे विनियोगः ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**

**ॐ अग्नये स्विष्टकृदिति मन्त्रस्य प्रजापतिर्ऋषिर्गायत्रीछन्दोऽग्निर्देवता स्विष्टकृद्धोमे विनियोगः ।**

**ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ।**

ततः संश्रवं प्राश्याचम्य पवित्राभ्यां मुखं मार्जयित्वा पवित्रे अग्नौ क्षिपेत् ।

ततः पूर्णपात्रमादाय–

ममामुकनाम्नः कुमारस्य उपनयनाङ्गहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं तण्डुलपूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्रह्मणे तुभ्यमहं संप्रददे ।

ब्रह्मा च स्वस्ति ब्रूयात् ॥ ततः

**ॐ सुमित्रिया दुर्मित्रिया इति मन्त्रद्वयस्य प्रजापतिर्ऋषिर्यजुरापो देवता प्रणीताविमोके विनियोगः ।**

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु** । इति प्रणीताजलेन कर्तुः शिरोऽभिषिच्य,

**ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यञ्च वयं द्विष्मः ।**

प्रणीतापात्रं सावशिष्टजलमैशान्यां न्युब्जीकुर्यात् ।

तत आस्तृतं बर्हिः आस्तरणक्रमेण उत्थाप्य–

**ॐ देवा गातुविद इति मन्त्रस्य वनस्पतिर्ऋषिर्विराट्छन्दो वातो देवता**

**बर्हिहोमे विनियोगः ।**

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित ।**

**मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वाते धाः ।**

**स्वाहा इदं प्रजापतये न मम** । हस्तेन जुहुयात् ।

## (ड) अनुशासनशिक्षा

यथा पिता- **"ब्रह्मचारी असि"**। कुमारः - **"असानि"** (**भवानि**)। पिता- **"आपोशान"**। कुमारः - **"अश्नानि"**। पिता- **"कर्म कुरु"**। कुमारः - **"करवाणि"**। पिता- **"मा दिवा सुषुप्थाः"** । कुमारः - **"न स्वपामि"**। पिता- **"वाचं यच्छ"**। कुमारः - **"यच्छामि"**। पिता-**"समिधमाधेहि"**। कुमारः - **"आदधानि"**। पिता- **"अपोऽशान"**। कुमारः- **"अश्नानि"**।

ततः पिता लग्नदोषसत्वे तत्परिहाराय लग्नात्सर्वारिष्टगोदानं कुर्यात्।

## (ढ) लग्नगोदानम्

अद्येहामुकोऽहम् अमुकनाम्नः कुमारस्य सावित्रीग्रहणलग्नात् अनिष्टस्थानस्थितैः ग्रहैः सूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये ग्रहाणां प्रीतये इमां गां रुद्रदैवत्यां तत्प्रत्याम्नायीभूतं सुवर्णं वह्निदैवतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे। ॐ तत्सन्न मम इति।

अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखोपविष्टाय उपसन्नाय गुरुं समीक्षमाणाय गुरुणा समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वा स्वयं पूर्वाभिमुखो गुरुः। अथ गुरोः पादावुपसङ्गृह्णीयात्।

उपसङ्ग्रहणप्रकारश्च- अभिवादक उत्ताने वाममणिबन्धे उत्तानं दक्षिणमणिबन्धं निधाय पूर्वं स्वकर्णौ स्पृशन्नभिवादयेत्।

## (ण) गुरोरभिवादनम्

अमुकगोत्रोऽमुकप्रवरोऽमुकवेदान्तर्गतामुकशाखाध्यायी अमुकशर्म्माहं भो गुरो त्वामभिवादये। गुरुश्च आयुष्मान्भव सौम्यामुकशर्म३न् इत्याशिषं प्रयुञ्जीत।

## (त) सावित्रीदानं मन्त्रदानं वा

प्रणवस्य ब्रह्मा ऋषिर्दैवीगायत्री छन्दः परमात्मा देवता व्याहृतीनां प्रजापतिर्ऋषिः

गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवता गायत्र्या विश्वामित्रऋषिर्गायत्रीछन्दः सविता देवता सावित्रीदाने विनियोगः। इत्यार्षादिकं स्मृत्वा प्रणवव्याहृतिपूर्वं गायत्रीं ब्रूयात्। तद्यथा-

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्**। इति प्रथमवारम्।

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि**। इति द्वितीयवारम्।

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्**।

इति तृतीयवारं सर्वां गायत्रीं प्रतिब्रूयात्॥ इति ब्रह्मगायत्री॥

क्षत्रियाय त्रिष्टुप्छन्दस्कां बृहस्पतिदृष्टां सवितृदैवत्यां **"देव सवितः"** इत्यादिकामृचं ब्रूयात्।

यथा

**ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।**

**दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु ॥**

*॥ इति क्षत्रियगायत्री ॥*

वैश्याय श्यावाश्वदृष्टां जगतीछन्दस्कां सवितृदेवत्यां विश्वा रूपाणीति ऋचं ब्रूयात् ।

**ॐ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद् भद्रं द्विपदे चतुष्पदे ।**

**विनाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजति** ॥ इति वैश्यगायत्री ॥

**"सर्वेषां वा गायत्रीम्"** इति सूत्रवचनात् गायत्रीमेव ।

ततो ब्रह्मचारी स्वाचार्याय वरं दद्यात् । अद्येहामुकशर्मा (अमुकवर्मा अमुकगुप्तो वा) अहं कृतैतद् गायत्रीग्रहणकर्मणः साद्गुण्यार्थमिदं सुवर्णमग्निदैवतं वररूपेणाचार्याय तुभ्यमहं सम्प्रददे । इति सङ्कल्प्य गुरोः पादयोः प्रणिपत्य समर्पयेत् । गुरुरप्याशीर्भिरभिनन्द्य अधीतानिराकरणं कारयेत् ।

## (थ) गुरोरभिवादनं वटुशिक्षणञ्च

अथातोऽधीत्यानिराकरणम् - **प्रतीकं मे विचक्षणं जिह्वा मे मधुयद्वचः । कर्णाभ्यां भूरि शुश्रुवे मा त्वाहार्षीच्छ्रुतम्मयि । ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मक्रोशम्मे विश । वाचा त्वापिदधामि । वाचा त्वापिदधामि । तिष्ठ प्रतिस्वरकरणदन्त्यौष्ठ्यकण्ठ्यौरसमेधा माधुर्यग्रहणधारणोच्चारणशक्तिर्म्मयि भवत्वाप्यायन्तु । मेऽङ्गानि वाक्प्राणश्चक्षुःश्रोत्रं यशोबलं यन्मे श्रुतमधीष्ठितन्तन्मे मनसि तिष्ठतु तिष्ठतु ॐ ।**

इति वटुं वाचयेदेतदधीतानिराकरणं नाम । ततो ब्रह्मचारी कालोपस्थितां मध्याह्नसन्ध्यामुपास्य समिदाधानं कुर्यात् ।

## (द) समिदाधानम्

ततो ब्रह्मचारी अग्नेः पश्चादुपविश्य प्रथमतोऽग्निं पञ्चभिर्मन्त्रैः सन्धुक्षयति । पाणिनाऽग्निं परिसमूहयति समृद्धीकरोतीत्यर्थः । पाणिनेति स्रुवादेर्निरासः ।

अग्ने सुश्रव इत्यादीनां पञ्चानां ब्रह्माऋषिः पञ्चयजूंषि अग्निर्द्देवता परिसमूहने विनियोगः ।

**ॐ अग्नेसुश्रवः सुश्रवसं मा कुरु ॥ १ ॥**

**ॐ यथा त्वमग्ने सुश्रवः सुश्रवाऽसि ॥ २ ॥**

**ॐ एवं माꣳसुश्रवः सौश्रवसं कुरु ॥ ३ ॥**

**ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ॥ ४ ॥**

**ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥**

इत्यग्निं परिसमूह्य तत उपकल्पितोदकेन प्रदक्षिणमग्निं पर्युक्ष्योत्थाय अग्नय इति मन्त्रेण समिधमादधाति । अग्नय इति प्रजापतिर्ऋषिराकृतिश्छन्दः समिद्देवता समिदाधाने विनियोगः ।

**ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिद्धचसऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳस्वाहा ।**

इत्येकां समिधं जुहुयात् । एवं द्वितीयां तृतीयां च समिधं होमयित्वा ततस्तूष्णीमुपविश्य पूर्ववत् अग्ने सुश्रव इत्यादि पञ्चभिर्मन्त्रैः परिसमूहनम् ।

## (ध) अद्भिरग्नेः पर्युक्षणम्

उपकल्पिताभिरद्भिः प्रदक्षिणं पर्युक्षणं च विधाय तूष्णीं पाणी प्रतप्य मुखं विमार्ष्टि । यथा

## (न) मुखविमर्शनम्

तनूपाऽअग्ने इत्यादीनां बृहद्देवा ऋषयस्त्रिष्टुप्छन्दोऽग्निर्देवता मुखविमर्शने विनियोगः ।

**ॐ तनूपाऽअग्नेसि तन्वं मे पाहि ।**

**ॐ आयुर्दाऽअग्नेस्यायुर्मे देहि ।**

**ॐ वर्च्चोदाऽअग्नेसि वर्च्चो मे देहि ।**

**ॐ अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण ।**

**ॐ मेधां मे देवः सविताऽआदधातु ।**

**ॐ मेधां देवी सरस्वती आदधातु ।**

**ॐ मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ ।**

इति सप्तभिर्मन्त्रैः प्रतिमन्त्रं ललाटादिचिबुकपर्यन्तं मुखं प्रोञ्छति (स्पृशेदिति हरिहरः) ।

## (प) अङ्गालम्भनम्

ततः **"अङ्गानि च मऽआप्यायन्ताम्"** इति बाहुभ्यां सर्वाङ्गं शिरस आपादमालभते ।

**"वाक्चम आप्यायताम्"** इति मुखे ।

**"प्राणश्च मऽआप्यायताम्"** इति नासिकायाम् ।

**"चक्षुश्चमऽआप्यायताम्"** इति नेत्रयोः ।

**"श्रोत्रं च मऽआप्यायताम्"** इति श्रोत्रयोः ।

**"यशोबलं च मऽआप्यायताम्"** इति बाह्वोः ।

## (फ) तिलककरणम्

ततोऽनामिकया अग्नेर्भस्म गृहीत्वा त्र्यायुषं कुरुते ।

त्र्यायुषमिति नारायणऋषिरनुष्टुप्छन्दोऽग्निर्देवता त्र्यायुषकरणे विनियोगः ।

**ॐ त्र्यायुषञ्जमदग्नेः** इति ललाटे ।

**ॐ कश्यपस्य त्र्यायुषम्** इति ग्रीवायाम् ।

**ॐ यद्देवेषु त्र्यायुषम्** इति दक्षिणांसे ।

**ॐ तन्नोऽअस्तु त्र्यायुषम्** इति हृदि ।

## (ब) अग्न्यभिवादनम्

अमुकगोत्रोऽमुकप्रवरो यजुर्वेदान्तर्गताऽमुकशाखाध्यायी अमुकशर्माहं भो वैश्वानर त्वामभिवादये ।

भो वरुण त्वामभिवादये ।

## (भ) गुरोरभिवादनम्

ततो व्यत्यस्तपाणिभ्यां गुरोः पादौ दक्षिणेन पाणिना दक्षिणं पादं वामेन वामं स्पृशन्नभिवादयेत् ।

अमुकगोत्रोऽमुकप्रवरो यजुर्वेदान्तर्गतामुकशाखाध्यायी अमुकशर्माहं भो गुरो त्वामभिवादये । इति वाक्यमुक्त्वा शिरसाऽभिवादयेत् । अभिवादितो गुरुश्च आयुष्मान्भव सौम्यामुकशर्म३न् इत्याशिषं दद्यात् । इति गुरुवन्दनं विधाय अथान्यानप्यभिवादयेत् ।

## (म) मान्यजनाभिवादनम्

ते च विद्यावयस्तपोवृद्धा अभिवाद्याः ।

तत्र स्मृतयः

**ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।**
**मातुलाश्च पितृव्याश्च श्वशुरास्तत्स्त्रियस्तथा ॥**
**प्रत्युत्थायाभिवाद्याः स्युर्ज्येष्ठभ्रातर एव च ।**
**गुरुमातास्तन्यदात्री पित्रादित्रयमेव च ॥**
**अन्नदाता भयत्राता मन्त्रविद्योपदेशकः ।**
**एते नित्याऽभिवाद्याः स्युः सपत्नीकाः शुभार्थिना ॥**
**विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ।**
**विप्रोष्य विप्रं कुशलं पृच्छेन्नृपमनामयम् ॥**
**वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥**

अथाभिवादनानर्हाः

**उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।**
**पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ॥**
**नास्तिकं कितवं स्तेनं कृतघ्नं नाभिवादयेत् ।**
**मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् ।**

**वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ॥**

**अभ्यक्तं शिरसि स्नानं कुर्वन्तं नाऽभिवादयेत् ।**

**जपयज्ञस्थलस्थं च समित्पुष्पकुशानलान् ।**

**उदपात्रार्घ्यभक्षान्नं वहन्तं नाभिवादयेत् ॥**

**अभिवाद्य द्विजश्चैतानहोरात्रेण शुद्ध्यति ।**

शूद्राभिवादने तु त्रिरात्रेण । केचित्तु अभिवादनात्पूर्वं सन्ध्योपासनमामनन्ति ।

तत्र ब्रह्मचारी सन्ध्यामुपास्याऽग्निकार्यं गुरूपसङ्ग्रहणं वृद्धेभ्यो नमस्कारं च कृत्वा भिक्षार्थं गच्छेत् ।

## (य) भिक्षादानम्[४♦]

तदुक्तं याज्ञवल्क्येन

**गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।**

**आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥**

**आदिमध्यवसानेषु भवच्छब्दोपलक्षिता ।**

**ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥** ॥ इति ॥

सूत्रं च

---

४♦ **ब्रह्मचारिनियमाः**

अथ ब्रह्मचारिनियमान् ब्रह्मचारिणे श्रावयेत् । अथ ब्रह्मचारिणो नियमान्वक्ष्यामः ।

अधः शाय्यक्षारालवणाशी स्यात् दण्डधारणमग्निपरिचरणं गुरुशुश्रूषां भिक्षाचरणं च कुर्यात् । मधुमांसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेत् ।

**अस्यार्थः–** अधःशायी स्यात् खट्वादौ न शयीतेत्यर्थः । अक्षारं क्षारं तैलतक्रादि तद्वर्जितम् । अलवणं लवणवर्जितं च अश्नीयात् । दण्डधारणं स्ववर्णविहितदण्डधारणं कुर्यात् । अग्निपरिचरणं पूर्वोक्तसमिदाधानं तच्च सायंप्रातः कुर्यात् । गुरुशुश्रूषां मनोवाक्कायकर्मभिर्हितसम्पादनं गुरोः कुर्यात् । भिक्षाचरणं सायंप्रातर्भोजनार्थं कुर्यात् । मधु क्षौद्रं मांसं पललं मज्जनं नद्यादावाप्लवनं स्नानं तुद्धृतोदकेन उपर्यासनं गुर्वादेः सान्निध्ये उच्चासनस्थितिं पीठे पीठं निधायासनं वा न कुर्यात् । स्त्रीगमनं हावभावादिभिः । स्त्रीणां मध्ये अवस्थानम् । अनृतं मिथ्याभाषणं वृथाभाषणं वा अदत्तानां द्रव्याणाम् आदानं ग्रहणं तृणादेरपि स्तेयः तं वर्जयेत् । आदिशब्देन पर्युषितान्नमुच्छिष्टभोजनं ताम्बूलं दन्तधावनमवसक्तिकां दिवास्वापं छत्रमुपानहौ द्यूतं नृत्यं गीतं वाद्यं माल्यमुद्वर्तनमनुलेपनं जलक्रीडां च वर्जयेत् ।

**कौपीनमहतं धार्यं खण्डं वा वस्त्रपार्श्वयुक् ।**
**नष्टे भ्रष्टे नवं मन्त्राद्धृत्वा भ्रष्टं जले क्षिपेत् ॥**
**यज्ञोपवीतमजिनं मौञ्जीं दण्डं च धारयेत् ।**

सन्ध्याकालातिक्रमे स्नानं प्रणायामत्रयं कृत्वा गायत्र्यष्टशतं च जपित्वा सन्ध्यां विदध्यात् । लोपेत्वयुतं जपेत् इति ।

ततो होमदक्षिणा -

अद्येहामुकोहं अमुक कुमारस्योपनयनाङ्गहोमकर्मणः साद्गुण्यार्थम् इदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा वररूपाय आचार्याय तुभ्यं संप्रददे । ॐ तत्सत् । इति दत्त्वा आशीषं प्रतिगृह्णीयात् ।

**भवत्पूर्वां ब्राह्मणो भिक्षेत ।**

**भवन्मध्यां राजन्यः ।**

**भवदन्त्यां वैश्यः ।**

तिस्रोऽप्रत्याख्यायिन्यः षट् द्वादश अपरिमिता वा मातरं प्रथमाम् इति । **"भवति भिक्षां मे देहि"** इति ब्राह्मणो याचेत । **"भिक्षां भवति मे देहि"** इति राजन्यः । **"भिक्षां मे देहि भवति"** इति वैश्यः ।

**"भो गुरो इयं भिक्षा मया लब्धा"** इति गुरवे निवेदयेत् । ॥ इति भिक्षा ॥

## (र) वेदारम्भः

**अथ वेदारम्भः**

वेदारम्भस्तु प्रथमं स्ववेदस्यैव कार्यः ।

गौतमः

**अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।**

**पारम्पर्यागतो येषां वेदः सपरिबृंहणः ॥**

**तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ।**

**एवमध्ययनं कुर्वन् ब्रह्मसायुज्यमाप्नुयात् ॥**

**सपरिबृंहणः सकल्पः वेदारम्भस्तूपनयनानन्तरं कार्यः ।**

तत्र योगियाज्ञवल्क्यः

**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।**

**वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥** ॥ इति ॥

अथ प्रयोगः

आचार्यो वेदारम्भवेदीसमीपमागत्योपविश्याचम्य गणेशं नमस्कृत्य पञ्चभूसंस्कारपूर्वकम् अग्निस्थापनं विधाय ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म कुर्यात् ।

पिता आचम्य गोदानं कृत्वा वेदीं दर्भैस्त्रिः परिसमुह्य तानैशान्यां परित्यज्य गोमयोदकेन उपलिप्य स्रुवमूलेन स्फ्येन वा प्रादेश दीर्घाः स्थण्डिलप्रमाणा वा प्रागग्रा उदक्संस्थास्तिस्रो रेखाः कृत्वा अनामिकाङ्गुष्ठाभ्यां यथोल्लेखं पांसूनुद्धृत्य उर्ध्वं क्षिप्त्वा, उदकेन वेदीं न्युब्जपाणिनाभिषिच्य कांस्यपात्रे निहितं कांस्यपात्रेण पिहितमग्निं वेद्या आग्नेयभागे निधाय क्रव्यादांशं **ॐ क्रव्यादाय नमः** निर्ऋतिदिशि परित्यज्य, स्थण्डिले स्वाभिमुखं स्थापयित्वा, अग्न्यानयनपात्रे साक्षतमुदकं क्षिपेत् । अग्नेर्दक्षिणदिक्स्थ आसने प्रागग्रान् षड्दर्भानास्तीर्य, अग्नेरुत्तरतः प्राङ्मुखं कर्मतत्त्वज्ञं ब्राह्मणं चन्दनाक्षतपुष्पवस्त्रद्रव्यादिभिः सन्तोष्य, अद्येहामुकगोत्रोऽमुकशर्माहममुकगोत्रस्य अमुकनाम्नो बटोर्वेदारम्भकर्माहं करिष्ये । तदङ्गहोमकर्मणि अमुकगोत्राऽमुकशर्मन् त्वं मे ब्रह्मा भव । वदेत् । ब्रह्मा च **भवामि** इत्युक्त्वा अग्नेः पूर्वेणागत्य पूर्वस्थापितासने उपविशेत् । ततो वितस्तिमात्रीं भुवं विहाय, अग्नेर्वायव्ये उत्तरे च प्रागग्रैः कुशैरासनद्वयं कल्पयित्वा, प्रणीतापात्रं दक्षिणहस्तेन वामहस्ते पूर्ववन्निधाय

दक्षहस्तोद्धृतपात्रस्थोदकेन आत्माभिमुखं पूरयित्वा वायव्यासने निधाय, दक्षिणहस्तानामिकयाऽऽलभ्य अग्न्युत्तरासने निदध्यात् । ततो बर्हिर्मुष्टिमादाय चतुर्धा विभज्यैकैकभागेन आग्नेयादीशानान्तमुत्तराग्रं ब्रह्मणोऽग्निपर्यन्तं पूर्वाग्रं नैर्ऋत्याद्वायव्यान्तं उत्तराग्रमग्नितः प्रणीतापर्यन्तं पूर्वाग्रं परिस्तीर्य पात्रादीन्यासादयेत्। पवित्रच्छेदनार्थं त्रीणि कुशतरुणानि पवित्रे साग्रेऽनन्तर्गर्भे कुशपत्रे द्वे, प्रोक्षणीपात्रम्, आज्यस्थाली, सम्मार्जन-कुशास्त्रयः साग्राः, उपयमनकुशास्त्रयोदश, समिधस्तिस्रः प्रादेशमात्र्यः, पालाश्यः, स्रुवः, आज्यं, गव्यम्, वेदपुस्तकम्, पूर्णपात्रम्, तत आसादितं कुशपत्रं गृहीत्वा, अग्रतः प्रादेशमात्रं विहाय, तयोरुपरि त्रीणि कुशतरुणानि तिर्यङ् निधाय पवित्रमूलेन पवित्रे प्रदक्षिणमावेष्टच त्रयाणां मूलाग्राणि द्वयोर्मूलानि च दक्षिणहस्तेन, पवित्रे वामहस्तेन परिगृह्य छित्वा, द्वयोर्मूले त्रीणि चोत्तरतः क्षिपेत् । ततः प्रोक्षणीपात्रं प्रणीताया उत्तरतो निधाय तत्र प्रणीतोदकं सपवित्रहस्तेन त्रिर्निक्षिप्य तदुदकं पवित्राभ्यां प्रादेशमात्रमूर्ध्वं क्षिप्त्वा पवित्रे प्रोक्षणीपात्रे निधाय प्रोक्षणीपात्रं दक्षहस्तेन वामहस्ते निधाय तदुदकं दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां त्रिरुर्ध्वोर्ध्वं क्षिप्त्वा प्रणीतोदकेन प्रोक्षेत् । प्रोक्षण्युदकेन आसादितानि न्युब्जान्युत्तानानि कृत्वा, एकैकशस्त्रिः प्रोक्ष्य, असञ्चरे प्रणीताग्न्योर्मध्ये प्रोक्षणीं निदध्यात्। तत आज्यस्थालीमग्नेः पश्चान्निधाय तत्र आसादितम् आज्यमात्माभिमुखं प्रक्षिप्य, आज्यस्थालीमग्नावारोप्य ज्वलदुल्मुकमग्नौ प्रक्षिप्य उदकं स्पृष्ट्वा इतरथा हस्तमावर्तयेत् । दक्षहस्तेन स्रुवमादाय पूर्वाग्रमधोबिलमग्नौ तापयित्वा वामहस्ते उत्तानबिलं निधाय दक्षिणहस्तधृतमध्यानां संमार्जनकुशानुत्तरतो निरस्य प्रणीतोदकेन न्युब्जपाणिनाऽभ्युक्ष्य पूर्ववत् प्रतप्य उदकं स्पृष्ट्वा दक्षिणतः स्वसमीपे निदध्यात्॥ ततः आज्यमुत्थाप्य अग्नेरुत्तरतः प्रोक्षण्याः पश्चाद्भागे संस्थाप्य, अग्नेः पश्चादानीय, पवित्राभ्यां किञ्चिदाज्यं प्रादेशमात्रमूर्ध्वं क्षिप्त्वा, आज्यमवलोक्य, अपद्रव्ये सति तन्निरस्य, प्रोक्षणीश्च पूर्ववदुत्पूय प्रोक्षण्यां पवित्रे निदध्यात् । उपयमनकुशान् दक्षहस्तेन वामहस्ते निधाय पूर्वमासादितास्तिस्रः समिध आदाय उत्थाय अग्नौ प्रागग्राः प्रक्षिप्य, दक्षिणचुलुकगृहीतेन सपवित्रेणाशेषेण प्रोक्षण्युदकेन अग्निं पर्युक्ष्य हस्तमितरथावर्त्य पवित्रे प्रणीतासु निदध्यात्। ततो ब्रह्मणा वामबाहौ कुशेनाऽन्वारब्धः पातितदक्षजानुः सोपयमनकुशं वामहस्तं हृदि निधाय उत्तानेन दक्षिणहस्तेन शङ्खमुद्रया मध्यमूलयोमर्ध्ये धृतेन स्रुवेणाज्येन–

**ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**[५♥] सर्वत्र स्वाहान्ते द्रव्यप्रक्षेपः ।

इति मनसा अग्नेरुत्तरभागे प्राञ्चमूर्ध्वमृजुं सन्ततमाज्येन पूर्वाघारमाघारयित्वा ।

**ॐ इन्द्रायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः।**

**ॐ इन्द्राय स्वाहा । इदं इन्द्राय न मम ।**

अग्नेर्दक्षिणभागे प्राञ्चमुत्तराघारम् (इत्याघारौ) ।

---

५ ♥आघाराज्यभागहोमप्रकारः हरिहरभाष्ये-
प्रजापतये स्वाहा इति मनसाध्यायन् प्राञ्चमूर्ध्वमृजुं सन्ततमाज्येन अग्नेरुत्तरप्रदेशे पूर्वाघारमाघारयति
इदं प्रजापतये इति त्यागं कृत्वा हुतशेषं पात्रान्तरे प्रक्षिपेत् । तथैव इन्द्राय स्वाहा, इति अग्नेर्दक्षिणप्रदेशे उत्तराघारम्
इदमिन्द्राय इति त्यागं विधाय, अग्नये स्वाहा इति अग्नेरुत्तरार्धपूर्वार्धे आज्यभागं हुत्वा इदमग्नये इति द्रव्यं त्यक्त्वा
तथैव सोमाय स्वाहा इति दक्षिणार्धपूर्वार्धे सौम्यमाज्यभागं हुत्वा इदं सोमाय इति स्वत्वं त्यजेत् समिद्धतमे वाग्निप्रदेशे
आघाराज्याः सर्वाहुतीर्जुहुयात् ।

**ॐ अग्नय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्छोऽग्निर्देवता आज्यहोमे विनियोगः ।**

**ॐ अग्नये स्वाहा । इदमग्नये न मम ।**

अग्नेरुत्तरार्धपूर्वार्धे

**ॐ सोमायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता आज्यहोमे विनियोगः ।**

**ॐ सोमाय स्वाहा । इदं सोमाय न मम ।**

एतावाज्यभागौ ततो ब्रह्मणाऽनन्वारब्धः ।

अथ यजुर्वेदाहुतयः

**ॐ अन्तरिक्षाय स्वाहा । इदमन्तरिक्षाय न मम ।**

**ॐ वायवे स्वाहा । इदं वायवे न मम ।**

**ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।**

**ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**

**ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।**

**ॐ ऋषिभ्यः स्वाहा । इदमृषिभ्यो न मम ।**

**ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।**

**ॐ मेधायै स्वाहा । इदं मेधायै न मम ।**

**ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।**

**ॐ अनुमतये स्वाहा । इदमनुमतये न मम ।**

अथ ऋग्वेदाहुतयः

**ॐ पृथिव्यै स्वाहा । इदं पृथिव्यै न मम ।**

**ॐ अग्नये स्वाहा । इदमग्नये न मम ।**

**ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।**

**ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**

**ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।**

**ॐ ऋषिभ्यः स्वाहा । इदमृषिभ्यो न मम ।**

**ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।**

**ॐ मेधायै स्वाहा । इदं मेधायै न मम ।**

**ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।**

ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥ ११॥

अथ सामवेदाहुतयः

ॐ दिवे स्वाहा । इदं दिवे न मम ।

ॐ सूर्याय स्वाहा । इदं सूर्याय न मम ।

ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।

ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।

ॐ ऋषिभ्यः स्वाहा । इदमृषिभ्यो न मम ।

ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।

ॐ मेधायै स्वाहा । इदं मेधायै न मम ।

ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।

ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥ ११ ॥

अथाथर्ववेदाहुतयः

ॐ दिग्भ्यः स्वाहा । इदं दिग्भ्यो न मम ।

ॐ चन्द्रमसे स्वाहा । इदं चन्द्रमसे न मम ।

ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।

ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।

ॐ ऋषिभ्यः स्वाहा । इदमृषिभ्यो न मम ।

ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।

ॐ मेधायै स्वाहा । इदं मेधायै न मम ।

ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।

ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥ ११ ॥

भूर्भुवः स्व इति महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवता आज्यहोमे विनियोगः ।

ॐ भूः स्वाहा । इदमग्नये न मम ।

ॐ भुवः स्वाहा । इदं वायवे न मम ।

ॐ स्वः स्वाहा । इदं सूर्याय न मम ।

त्वन्नोऽअग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते आज्यहोमे विनियोगः ।

ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो विश्श्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥

सत्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते आज्यहोमे विनियोगः ।

ॐ सत्वन्नोऽअग्नेऽवमो भवोती नेदिष्टोऽअस्याऽउषसो व्युष्टौ ।

अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि स्वाहा ॥

इदमग्नीवरुणाभ्यां न मम ।

अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः ।

ॐ अयाश्चाग्नेस्यनभिशस्ति पाश्च सत्यमित्वमयाऽअसि ।

अया नो यज्ञं वहास्यया नो धेहि भेषजꣳस्वाहा ॥

इदमग्नये न मम ।

ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणसवितृविष्णुर्विश्वेदेवा

मरुतः स्वर्का देवता आज्यहोमे विनियोगः ।

ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।

तेभिर्न्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम ।

उदुत्तममिति शुनःशेफऋषिस्त्रिष्टुप्छन्दो वरुणो देवता आज्यहोमे विनियोगः ।

ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय ।

अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥

इदं वरुणाय न मम ॥

ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता

आज्यहोमे विनियोगः ।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

ॐ अग्नये स्विष्टकृदिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता स्विष्टकृद्धोमे विनियोगः ।

ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ।

संश्रवप्राशनं ब्रह्मणे पूर्णपात्रदानम् ।

## (ल) पूर्णपात्रदानसङ्कल्पः

अद्येहामुकोऽहम् अमुकनाम्नः कुमारस्य वेदारम्भाङ्गहोमकर्मणः साङ्गफलप्राप्तये अपूर्णस्यपूर्णार्थमिदं पूर्णपात्रं प्रजापतिदैवतम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यं संप्रददे । इति दद्यात् ।

ततः पवित्रप्रतिपत्तिः प्रणीताविमोकः बर्हिर्होमश्च ।

## (व) गणेशादीनां पूजनम्

अथ वेदारम्भक्रमो यथा- अद्येहामुकोहम् अमुकशर्मणो माणवकस्य वेदारम्भकर्मणः पूर्वाङ्गत्वेन गणेशादीनां स्थापनावाहनपूजनानि करिष्ये । ताम्रस्थाल्यादौ दध्यक्षतान्गृहीत्वा उत्तरवृद्ध्या स्थापयेद् । ॐ भूर्भुवः स्वः गणेश इहागच्छेह तिष्ठ पूजार्थं त्वामावाहयामि । ॐ भूर्भुवः स्वः विष्णो इहा... । ॐ भूर्भुवः स्वः सरस्वति इहा... । ॐ भूर्भुवः स्वः लक्ष्मि इहा... । ॐ भूर्भुवः स्वः स्वविद्यासूत्रकार कात्यायन इहा... । **एतन्त** इति प्रतिष्ठाप्य नाममन्त्रेण ध्यानादिनीराजनान्तं सम्पूज्य ततो ब्रह्मचारिणे यथाविधि वेदमध्यापयेत् । यथा अग्नेरुत्तरतो ब्रह्मचारिणमुदङ्मुखं प्राङ्मुखं वा प्रागग्रेषु कुशेषूपवेश्य स्मार्ताचमनं प्राणायामं बद्धाञ्जलिं च कारयित्वा ।

## (श) वेदाध्ययनम्

ॐ कारपूर्वां महाव्याहृतिपूर्वां त्रिवारं गायत्रीं पठित्वा स्ववेदारम्भं कुर्यात् । तत्र ॐ इषेत्वादि खम्ब्रह्मान्तस्य माध्यन्दिनीयकस्य वाजसनेयस्य यजुर्वेदाम्नायस्य विवस्वान्ऋषिर्गायत्र्यादीनि सर्वाणि च्छन्दांसि सर्वाणि यजूंषि लिङ्गोक्ता देवता यजुर्वेदारम्भे विनियोगः ।

> **ॐ भूर्भुवः स्वः इषेत्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा मावस्ते नऽईशत माघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि** ॥ १ ॥

अथवा

> **ॐ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम्** ।
>
> **आस्मिन्हव्या जुहोतन** ॥
>
> **ॐ वसोः पवित्रम् इति स्वल्पारम्भं कारयित्वा अध्यायादीन्प्रब्रूयात्** ।
>
> **ॐ कृष्णोसि.॥२॥ ॐ समिधाग्निम्.॥३॥ ॐ एदम्.॥४॥ ॐ अग्नेस्तनूः ॥५॥**
>
> **ॐ देवस्य त्वा.॥६॥ ॐ वाचस्पतये.॥७॥ ॐ उपयामगृहीतोसि.॥८॥**
>
> **ॐ देवसवितः ॥९॥ ॐ अपोदेवाः ॥१०॥ ॐ युञ्जानः प्रथमम् ॥११॥**
>
> **ॐ दृशानोरुक्क्मः.॥१२॥ ॐ मयि गृह्णामि.॥१३॥ ॐ ध्रुवक्षितिर्ध्रुवयोनिः ॥१४॥**
>
> **ॐ अग्ग्ने जातान्.॥१५॥ ॐ नमस्ते.॥१६॥ ॐ अश्मन्नूर्ज्जम्.॥१७॥**
>
> **ॐ वाजश्च्च.॥१८॥ ॐ स्वाद्वीन्त्वा.॥१९॥ ॐ क्षत्रस्य योनिः ॥२०॥**
>
> **ॐ इमम्मे.॥२१ ॥ ॐ तेजोसि.॥२२॥ ॐ हिरण्यगर्ब्भः सम्.॥२३॥**

**ॐ अश्श्वस्तूपरः ॥२४॥ ॐ शादन्दद्भिः ॥२५॥ ॐ अग्निश्च.॥२६॥**

**ॐ समास्त्वा.॥२७॥ ॐ होता यक्षत् ॥२८॥ ॐ समिद्धोऽअञ्जन्.॥२९॥**

**ॐ देव सवितः ॥३०॥ ॐ सहस्रशीर्षा पुरुषः ॥३१॥ ॐ तदेव.॥३२॥**

**ॐ अस्याजरासः ॥३३॥ ॐ यज्जाग्रतः ॥३४॥ ॐ अपेतः ॥३५॥ (जलस्पर्शः विष्णोर्वा स्मरणम् ।) ॐ ऋचंवाचम् ॥३६॥ ॐ देवस्य त्वा ॥ ३७ ॥**

**ॐ देवस्य त्वा.॥३८॥ ॐ स्वाहा प्राणेभ्यः..॥३९॥**

**ॐ ईशावास्यमिदꣳसर्वं यत्किञ्च जगत्यां जगत् ।**

**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥**

**ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**

**योसावादित्ये पुरुषः सोसावहम् । ॐ खम्ब्रह्म ॥४०॥**

**व्रतमुपैष्यन्नन्तरेणाहवनीयञ्च गार्हपत्यञ्च प्राङ्तिष्ठन्नपऽउपस्पृशति**

**तद्यदपऽउपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेद्धया वाऽआपो मेद्धयो भूत्वा व्रतमुपायानीति पवित्रं वाऽआपः पवित्रपूतो व्रतमुपायनीति तस्म्माद्वाऽआपऽउपस्पृशति सोग्ग्निमेवाभीक्षमाणो व्व्रतमुपैति ॥१॥**

**ॐ प्राश्नीपुत्रादासुरिवासिनः प्प्राश्नीपुत्रऽआसुरायणादासुरायण आसुरेरासुरिर्याज्ञवल्क्या-द्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुणऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो वाद्धयोगाज्जिह्वावान्वाध्योगोऽसिता द्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैर्ध्रुवेः कश्यपो नैर्ध्रुविर्वाचो वागम्भिण्याऽअम्भिण्यादित्यादा-दित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥२॥**

इत्यन्तं यजुर्वेदारम्भं परिसमापयेत् ।

अथ ऋग्वेदादि मन्त्रस्य मधुच्छन्दा ऋषिर्गायत्रीछन्दोऽग्निर्देवता स्वाध्याये विनियोगः ।

**ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥**

इति ऋग्वेदारम्भः ।

अथ सामवेदादिमन्त्रस्य गौतमऋषिर्गायत्रीछन्दोग्निर्देवता स्वाध्याये विनियोगः ।

**ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ।**

इति सामवेदारम्भः ।

शन्नोदेवीरिति दध्यङ्ङाथर्वण ऋषिर्गायत्रीछन्दोग्निर्देवता स्वाध्याये विनियोगः ।

**ॐ शन्नोदेवीरभीष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ।** इत्यथर्ववेदारम्भः ।

पुनः पूर्ववत् प्रणवमहाव्याहृतिपूर्विकां गायत्रीं त्रिरुक्त्वा **"ॐ विरामोऽस्तु"** इति वदन्तं

गुरुं शिष्यः पादोपसङ्ग्रहणपूर्वकं प्रणम्य विरमेत् ।[६♣]

## (ष) दक्षिणादानम्

अथ दक्षिणादानार्थं दक्षिणासङ्कल्पं कुर्यात् । तत्र सङ्कल्पः

अद्येहामुकोहम् अमुकशर्म्मणो वटोः वेदारम्भहोमकर्मणः वेदारम्भकर्मणश्च साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इदं सुवर्णमग्निदैवतं वररूपेणाचार्याय तुभ्यं सम्प्रददे इति दद्यात् । आचार्यश्चाशिषं दद्यात् ॥

*॥ इति वेदारम्भविधिः ॥*

---

६ ♣ **अध्ययननियमाः**

अधीतानिराकरणमन्त्रान् पठेत् ।

**अथातोधीत्याधीत्यानिराकरणं प्रतीकम्मे विचक्षणं जिह्वा मे मधुयद्वचः कर्णाभ्यां भूरिशुश्रुवे मा त्वा हार्षिच्छ्रुतम्मयि । ॐ ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोसि सनिरसि शान्तिरस्यनिराकरणमसि । ब्रह्मकोशम्मे विश वाचा त्वा पिदधामि तिष्ठ प्रतिस्वरकरणदन्त्यौष्ठ्यकण्ठ्यौरसमेधा माधुर्य ग्रहणधारणोच्चारणशक्तिर्म्मयि भवत्वाप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशोबलं यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॐ इति** । अथाचारात् अस्मिन्नवसरे वटुं पाठार्थं वाराणसीं प्रति प्रस्थापयन्ति अथवा देवादीनां दर्शनार्थं प्रस्थापयन्ति । वेदानां ग्रहणे सूत्रम्-

**अष्टचत्वारिꣳशद्वर्षाणि वेदब्रह्मचर्य चरेत् द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणं वेति ।**

आचार्येणाहूतोऽधीयीत, शयानं चेदासीनः, आसीनं चेत्तिष्ठन्, तिष्ठन्तं चेदभिधावन्, अभिधावन्तं चेदभिक्रामन्, गुरुमेवं वर्त्तमानो ब्रह्मचारी ब्रह्मभूयाय कल्पते इति ।

अष्टमः पाठः

# (आ) समावर्तनम्

**अथ समावर्तनम्**

तत्र सूत्रम्- "वेदं व्रतानि वा समाप्य स्नायात्" इति ।

स्मृतिश्च –

**वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।**

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्** ॥ इति ।

**त्रयः स्नातका भवन्ति । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकः** ॥ इति ।

१. **समाप्य वेदम् असमाप्य व्रतं यः समावर्तते स विद्यास्नातकः** ।

२. **समाप्य व्रतम् असमाप्य वेदं यः समावर्तते स व्रतस्नातकः** ।

३. **विद्यां च व्रतं चोभयं समाप्य यः स्नाति स विद्याव्रतस्नातकः** ॥ इति ।

द्वादशवार्षिकादिकं व्रतं ब्रह्मचर्यव्रतमिति । ब्रह्मचर्यं वाऽष्टचत्वारिंशकम् । आषोडशवर्षात् ब्राह्मणस्य, आद्वाविंशाद्राजन्यस्य, आचतुर्विंशाद् वैश्यस्य, अनतीत कालो भवति । अत ऊर्ध्वं पतितसावित्रीका भवन्ति । त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनञ्च । तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्तीति वचनात् ॥ तत्र विधिस्तु वेदारम्भवत्कार्यः । एतदेवव्रतादेशनविसर्गेषु कर्त्तव्यमिति पारस्करवचनात् ।

अथ स्नातको वररूपेण गवादिकमाचार्याय दद्यात् ।

तत्र सङ्कल्पः

अद्येहामुकोऽहं स्नातकत्वाधिकारसिद्धये इमां गां गोप्रत्याम्नायीभूतं सुवर्णं वा आचार्याय तुभ्यं सम्प्रददे । इति गुरवे वरं दत्वा "भो गुरो स्नास्यामि" इति सम्प्रार्थ्य "स्नाहि" इति लब्धानुज्ञः स्नायात् ।

अथाचार्यः समावर्तनवेदीसमीपमागत्य उपविश्य तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य प्रतिज्ञासङ्कल्पं कुर्यात् । अद्येह अमुकोऽहम् अमुकशर्मणः कुमारस्य स्नातकत्वसिद्धये समावर्तनकर्म करिष्ये । इति सङ्कल्प्य ब्रह्मोपवेशनादि पूर्णपात्रदानान्तं कर्म कुर्यात् ।

## (क) अथ प्रयोगः

वेदादिसमाप्तौ नम्रेण ब्रह्मचारिणा यथाशक्ति दक्षिणां दत्त्वा **"भो गुरो, स्नास्यामि"** इत्युक्ते **"स्नाहि"** इति गुरुणोक्ते बहिः शालायां हस्तमात्रां चतुरङ्गुलोच्छ्रितां प्रागुदक्प्रवणां मृत्तिकादिभिर्वेदिं निर्माय, अङ्गुष्ठकनिष्ठाभ्यां गृहितैस्त्रिभिर्दर्भैः स्थण्डिलोपरितः पांसून्पूर्वतस्त्रिरपसार्य दर्भानैशान्यां क्षिप्त्वा, गोमयोदकेन उपलिप्य, खादिरेण स्रुवेण स्फ्येन कुशमूलेन वा प्रादेशदीर्घाः स्थण्डिलप्रमाणाः प्रागग्रा

उदक्संस्थास्तिस्रो रेखाः कृत्वा अङ्गुष्ठकनिष्ठाभ्यां प्रतिरेखं यथोल्लेखं पांसूनुद्धृत्योर्ध्वं क्षिप्त्वा, उदकेन स्थण्डिलं न्युब्जपाणिनाभिषिच्य, कांस्यपात्रे निहितं तेनैव पिहितमग्निं स्थण्डिलादाग्नेयभागे निधाय, क्रव्यादांशं नैर्ऋत्यां क्षिपेत् । स्थण्डिले स्वाभिमुखं **राजपुत्रनामानमग्निं** स्थापयित्वा, अग्न्यानयनपात्रे साक्षतमुदकं क्षिपेत् । ततो गुरुः अग्नेः दक्षिणस्यां दिशि स्थापिते पीठासने प्रागग्रान्षड्दर्भान्निधाय अग्नेरुत्तरस्थितं प्राङ्मुखं ब्रह्माणं चन्दनाक्षतादिभिः सम्पूज्य-

अद्येहाऽमुकगोत्रोऽमुकशर्माहं ममामुकनाम्नो ब्रह्मचारिणः समावर्तनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रोऽमुकशर्मा त्वं मे ब्रह्मा भव इति ब्रह्मा च भवामि, उक्त्वा अग्नेः पूर्वेणागत्य वितस्तिमात्रां भुवं विहाय, अग्नेर्वायव्ये उत्तरे च प्रागग्रैः कुशैरासनद्वयं कल्पयित्वा, प्रणीतापात्रं दक्षहस्तेन वामहस्ते पूर्वाग्रं निधाय दक्षहस्तोद्धृतोदकेन आत्माभिमुखं पूरयित्वा वायव्यासने निधाय दक्षहस्तानामिकयाऽऽलभ्य उत्तरासने निदध्यात् । ततो बर्हिर्मुष्टिमादाय तच्चतुर्थांशैराग्नेयादीशानान्तमुत्तराग्रं, ब्रह्मणोऽग्निपर्यन्तं पूर्वाग्रं, नैर्ऋत्याद्वायव्यान्तमुत्तराग्रम्, अग्नितः प्रणीतापर्यन्तं पूर्वाग्रम्, इति परिस्तरणं कुर्यात् ।

अथ उदगग्राः प्राक्संस्थाः पदार्थाः स्थाप्याः ।

पवित्रच्छेदनार्थं कुशपत्रत्रयम्, पवित्रे साग्रेऽनन्तर्गर्भे कुशपत्रे द्वे, प्रोक्षणीपात्रम्, आज्यस्थाली, संमार्जनकुशास्त्रयः साग्राः, उपयमनकुशास्त्रयोदश, समिधस्तिस्रः प्रादेशमात्र्यः पालाश्यः, स्रुवः, आज्यं गव्यम्, पूर्णपात्रं, समिन्धनकाष्ठानि दश, पर्युक्षणार्थमुदकम्, हरितकुशान्, अष्टौ उदककुम्भान्, द्वादशाङ्गुलमौदुम्बरं दन्तकाष्ठम्, दधि, नापितम्, स्नानार्थमुदककुम्भम्, उद्वर्तनद्रव्यम्, चन्दनम्, अहते वाससी, यज्ञोपवीते, पुष्पमाल्यादीनि, उष्णीषम्, कुण्डले, कज्जलम्, आदर्शम्, नूतनं छत्रम्, उपानहौ, वेणुदण्डम्, उपकल्प्य ।

तत आसादितं कुशपत्रं गृहीत्वा, अग्रतः प्रादेशमात्रं विहाय, तयोरुपरि त्रीणि कुशतरुणानि तिर्यङ्निधाय, पवित्रमूलेन पवित्रे प्रदक्षिणमावेष्ट्य, त्रयाणां मूलाग्राणि द्वयोर्मूलानि च दक्षिणहस्तेन पवित्रे वामहस्तेन परिगृह्य छित्वा द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् । प्रोक्षणीपात्रं प्रणीताया उत्तरतो निधाय, प्रणीतोदकं सपवित्रहस्तेन त्रिर्निक्षिप्य तदुदकं पवित्राभ्यां प्रादेशमात्रं मूर्ध्वं क्षिप्त्वा पवित्रे प्रोक्षणीपात्रे निधाय प्रोक्षणीपात्रं दक्षहस्तेन वामहस्ते निधाय, तदुदकं दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां त्रिरूर्ध्वोर्ध्वं क्षिप्त्वा प्रणीतोदकेन प्रोक्षेत् । इत्थं संस्कृतेन प्रोक्षण्युदकेन आसादितानि न्युब्जानि पात्राण्युत्तानानि कृत्वा आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि एकैकशस्त्रिः प्रोक्ष्य असञ्चरे प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रं निदध्यात् । तत आज्यस्थालीमग्नेः पश्चान्निधाय तत्रासादितमाज्यमात्माभिमुखं प्रक्षिपेत् । तत आज्यस्थालीमग्नावारोप्य, ज्वलदुल्मुकम् आज्यस्योपरि समन्तादीशानीमारभ्य प्रदक्षिणं भ्रामयित्वाऽग्नौ प्रक्षिप्य, उदकं स्पृष्ट्वा, इतरथा हस्तमावर्तयेत् । स्रुवं वामहस्तेन दक्षिणहस्ते निधाय, पूर्वाग्रमधोबिलमग्नौ तापयित्वा वामे पाणावुत्तानबिलं निधाय दक्षहस्तधृतमध्यानां संमार्जनकुशानामग्रैर्मूलतोऽग्रपर्यन्तं मूलैरग्रतो मूलपर्यन्तं संमृज्य, संमार्जनकुशानुत्तरतो निरस्य, प्रणीतोदकेन न्युब्जपाणिनाभ्युक्ष्य, पूर्ववत् प्रतप्य, उदकं स्पृष्ट्वा, दक्षिणतः स्वसमीपे निदध्यात् । आज्यमुत्थाप्य, प्रथमतोऽग्नेरुत्तरतः प्रोक्षणीपात्रस्य पश्चात् स्थापयित्वा, ततोऽग्नेः पश्चादानीय, पवित्राभ्यां किंचिदाज्यं प्रादेशमात्रम् ऊर्ध्वं क्षिप्त्वा, आज्यमवलोक्य, सत्यपद्रव्ये

तन्निरस्य, प्रोक्षणीश्च पूर्ववदुत्पूय प्रोक्षणीषु पवित्रे निदध्यात् ।

उपयमनकुशान् दक्षिणपाणिना वामपाणौ निधाय तिस्रः समिधः आदायाग्नौ प्रागग्राः प्रक्षिप्य दक्षचुलुकगृहीतेन सपवित्रेणाऽशेषेण प्रोक्षण्युदकेन ईशानाद्युदक्पर्यन्तमग्निं परिषिच्य, हस्तमितरथावर्त्य पवित्रे प्रणीतासु निदध्यात् । ततो ब्रह्मणा कुशेन दक्षिणबाहौ अन्वारब्धः पातितदक्षिणजानुः सोपयमनकुशं वामहस्तं हृदये निधाय उत्तानेन दक्षिणहस्तेन शङ्खमुद्रया मध्यमूलयोर्मध्ये धृतेन स्रुवेण आज्येन-

## (ख) हवनम्

**ॐ प्रजापतय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**

प्रजापतिं मनसा ध्यायन्, अग्नेरुत्तरभागे प्राञ्चमृजुमूर्द्ध्वं दीर्घं संततमाघारयति त्यागान्ते किञ्चित्स्रुवावशिष्टमाज्यं संस्रवधारणपात्रे प्रक्षिपेत् । एवमुत्तरत्रयोदशाहुतिषु संस्रवधारणम् ॥ सर्वत्र स्वाहान्ते द्रव्यप्रक्षेपः ॥

**ॐ इन्द्रायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता आज्यहोमे विनियोगः ।**

**ॐ इन्द्रायस्वाहा इदमिन्द्राय न मम ।**

अग्नेर्दक्षिणभागे पूर्ववदुत्तराघारं जुहुयात् ॥ इत्याघारौ ॥ इति समिद्धतमेऽग्निप्रदेशे ॥

**ॐ अग्नय इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः ।**

**ॐ अग्नये स्वाहा । इदमग्नये न मम ॥१॥**

**ॐ सोमायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता आज्यहोमे विनियोगः ।**

**ॐ सोमाय स्वाहा । इदं सोमाय न मम ॥२॥** एतावाज्यभागौ ।

तत्र यजुर्वेदाहुतयः

**ॐ अन्तरिक्षाय स्वाहा । इदमन्तरिक्षाय न मम ।**

**ॐ वायवे स्वाहा । इदं वायवे न मम ।**

**ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।**

**ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**

**ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।**

**ॐ ऋषिभ्यः स्वाहा । इदं ऋषिभ्यो न मम ।**

**ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।**

**ॐ मेधायै स्वाहा । इदं मेधायै न मम ।**

**ॐ सदसस्पतये स्वाहा । इदं सदस्पतये न मम ।**

ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥११॥

अथ ऋग्वेदाहुतयः

ॐ पृथिव्यै स्वाहा । इदं पृथिव्यै न मम ।

ॐ अग्नये स्वाहा । इदमग्नये न मम ।

ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।

ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।

ॐ ऋषिभ्यः स्वाहा । इदं ऋषिभ्यो न मम ।

ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।

ॐ मेधायै स्वाहा । इदं मेधायै न मम ।

ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।

ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥११॥

अथ सामवेदाहुतयः

ॐ दिवे स्वाहा । इदं दिवे न मम ।

ॐ सूर्याय स्वाहा । इदं सूर्याय न मम ।

ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।

ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।

ॐ ऋषिभ्यः स्वाहा । इदं ऋषिभ्यो न मम ।

ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।

ॐ मेधायै स्वाहा । इदं मेधायै न मम ।

ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।

ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥ ११ ॥

अथाथर्ववेदाहुतयः

ॐ दिग्भ्यः स्वाहा । इदं दिग्भ्यो न मम ।

ॐ चन्द्रमसे स्वाहा । इदं चन्द्रमसे न मम ।

ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम ।

**ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम ।**

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।**

**ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम ।**

**ॐ ऋषिभ्यः स्वाहा । इदं ऋषिभ्यो न मम ।**

**ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न मम ।**

**ॐ मेधायै स्वाहा । इदं मेधायै न मम ।**

**ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम ।**

**ॐ अनुमतये स्वाहा । इदमनुमतये न मम ॥११॥**

ततो भूरादिनवाहुतिहोमं स्विष्टकृतं च हुत्वा संस्रवप्राशनं पवित्रप्रतिपत्तिः पूर्णपात्रम् ।

## (ग) पूर्णपात्रदानसङ्कल्पः

अद्येहेत्यादि अमुकोऽहम् अमुकनाम्नो ब्रह्मचारिणः समावर्त्तनाङ्गहोमकर्मणः साङ्गफलप्राप्तये अपूर्णस्यपूर्णार्थम् इदं पूर्णपात्रं ब्रह्मन् तुभ्यं सम्प्रददे ।

प्रणीताविमोकः बर्हिहोमश्च कुर्यात् ।

ततो ब्रह्मचारी **"अग्ने सुश्रव"** इत्यादिमन्त्रैः अग्निपरिसमूहनं कुर्यात् ।

## (घ) अग्निपरिसमूहनम्

अग्ने सुश्रव इत्यादीनां पञ्चानां ब्रह्मा ऋषिर्यजुश्छन्दोऽग्निर्द्देवता परिसमूहने विनियोगः ।

**ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु ॥१॥**

**ॐ यथा त्वमग्ने सुश्रवः सुश्रवाऽअसि ॥२॥**

**ॐ एवं माꣳसुश्रवः सौश्रवसं कुरु ॥३॥**

**ॐ यथा त्वमग्ने यज्ञस्य निधिपाऽअसि ॥४॥**

**ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥५॥**

प्रदक्षिणमग्निं पर्युक्ष्य (वारिणाग्निं प्रदक्षिणीकृत्य) उत्थाय ।

## (ङ) समिदाधानम्

एकां समिधमादाय तिष्ठन्

अग्नये समिधमिति प्रजापतिर्ऋषिराकृतिश्छन्दः समिद्देवता समिदाधाने विनियोगः ।

**ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिद्धचसऽएवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्च्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳस्वाहा ॥**

इति मन्त्रेण जुहुयात्। एवं द्वितीयां तथा तृतीयां च समिधं हुत्वा उपविश्य अग्ने सुश्रव इत्यादि पञ्चभिर्मन्त्रैः पूर्ववद्धोमयेत् परिसमूहनं पर्युक्षणं च विधाय तूष्णीं पाणी प्रतप्य मुखं विमार्ष्टि।

### (च) मुखविमर्शनम्

**ॐ तनूपाऽअग्नेऽसि तन्वं मे पाहि।**

**ॐ आयुर्दाऽअग्नेस्यायुर्मे देहि।**

**ॐ वर्च्चोदाऽअग्नेऽसि वर्च्चो मे देहि।**

**ॐ अग्ने यन्मे तन्वाऽऊनं तन्मऽआपृण।**

**ॐ मेधाम्मे देवः सविताऽआदधातु।**

**ॐ मेधां देवी सरस्वती आदधातु।**

**ॐ मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ।**

इति प्रतिमन्त्रं ललाटाच्चिबुकपर्यन्तं मुखं प्रोञ्छति।

### (छ) अङ्गालम्भनम्

**ॐ अङ्गानि च मऽआप्यायन्ताम्**। इति शिरस आपादमङ्गान्यालभेत्।

**ॐ वाक्च मऽआप्यायताम्**। इति मुखम्।

**ॐ प्राणश्च मऽआप्यायताम्**। इति नासिकाम्।

**ॐ चक्षुश्च मऽआप्यायताम्**। इति चक्षुषी।

**ॐ श्रोत्रं च मऽआप्यायताम्**। इति श्रोत्रे।

**ॐ यशोबलं च मऽआप्यायताम्**। इति बाहू।

### (ज) अग्न्यभिवादनम्

व्यत्यस्तपाणिभ्यां कार्यम्।

अमुकगोत्रोऽमुकवेदान्तर्गतामुकशाखाध्यायी अमुकशर्म्मा अहं भो वैश्वानर त्वामभिवादये।

इत्यग्निमभिवाद्य

भो वरुण त्वामभिवादये। इति वरुणम्।

### (झ) गुरोरभिवादनम्

ततः कर्णौ स्पृष्ट्वा व्यत्यस्तपाणिभ्यामभिवादयेत्।

अमुकगोत्रोऽमुकवेदान्तर्गतामुकशाखाध्यायी अमुकशर्मा अहं भो गुरो त्वामभिवादये इति गुरुमभिवादयेत्। गुरुश्च आयुष्मान्भव सौम्यामुकशर्म३न् इत्याशिषं ददाति।

## (ञ) तिलककरणम्

अथानामिकयाग्नेर्भस्म गृहीत्वा त्र्यायुषाणि कुरुते ।

**ॐ त्र्यायुषञ्जमदग्नेः** । इति ललाटे ।

**ॐ कश्यपस्य त्र्यायुषम्** । इति ग्रीवायाम् ।

**ॐ यद्देवेषु त्र्यायुषम्** । इति दक्षिणांसे ।

**ॐ तन्नो अस्तु त्र्यायुषम्** । इति हृदि ।

## (ट) अष्टकलशपूजनं जलाभिषेचनञ्च

अथ परिश्रितस्याग्नेरुत्तरतः पूर्वतो वाऽष्टौ कलशान् स्थापयित्वा यथाविधि संपूजयेत् ।

तत्र प्रथम कलशे– (दक्षिणत उत्तरवृद्ध्या कार्या)

**ॐ तत्त्वायामि ब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः** ।

**अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआयुः प्रमोषीः** ॥

इति वरुणं ब्राह्मीम् इन्द्रम् आवाह्य पञ्चोपचारैः संपूजयेत् ।

द्वितीयकलशे–

**ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु** ।

**येऽअन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः** ॥

इति नागान् माहेश्वरीम् अग्निम् आवाह्य संपूजयेत् ।

तृतीयकलशे–

**ॐ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसोमुदोनाम** ।

**स नऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा** ॥

इति अप्सरसः कौमारीं यमम् आवाह्य पूजयेत् ।

चतुर्थे–

**ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विशीमतः सुरुचो व्वेनऽआवः** ।

**स बुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्चयोनिमसतश्चव्विवः** ॥

इति ब्रह्माणं वैष्णवीं निर्ऋतिम् आवाह्य संपूजयेत् ।

पञ्चमे–

**ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि व्विष्णोर्द्ध्रुवोसि** ।

**वैष्णवमसि विष्णवे त्वा** ॥ इति वामनं वाराहीं वरुणम् आवाह्य संपूजयेत् ।

षष्ठे–

**ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ।**

**मानोवीरान्नुद्रभामिनोवधीर्हविष्मन्तः सदमित्वाहवामहे ॥**

इति रुद्रम् ऐन्द्रीं वायुम् आवाह्य संपूजयेत् ।

सप्तमे–

**ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।**

**सभूमिꣳसर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥**

इति अष्टचिरञ्जीविनं चामुण्डां सोमम् आवाह्य संपूजयेत् ।

अष्टमकलशे–

**ॐ श्रीश्चतेलक्ष्मीश्चपत्क्न्यावहोरात्रेपाश्र्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ।**

**इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥**

इति लक्ष्मीं महालक्ष्मीम् ईशानम् आवाह्य संपूज्य धूपदीपनैवेद्यदक्षिणान्तं कुर्यात् ।

अथ कुम्भानां पुरस्तात् प्रागग्रान् कुशानास्तीर्य तेषु स्वयं स्थितो ब्रह्मचारी (प्राञ्चि उदञ्चि वा कर्माणि भवन्तीति न्यायात्) दक्षिणस्य प्रथमत्वं सूत्रकारेणोपात्तं तस्मादित्येवं क्रमेण प्रथमादुदकुम्भादप आदत्तेऽनेन मन्त्रेण ।

येऽअप्स्वन्तरिति प्रजापतिर्ऋषिरतिजगतीछन्द आपो देवता अपामादाने विनियोगः ।

**ॐ येऽअप्स्वन्तरग्नयः प्रविष्टा गोह्यऽउपगोह्यो मयूखो**

**मनोहाऽस्खलोविरुजस्तनूदूखुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामि ।**

इति प्रथमोदककुम्भाद्दक्षिणचुलुकेन अपो गृहीत्वा आत्मानमभिषिञ्चति **तेन मामिति** मन्त्रेण ।

तेनेति प्रजापतिर्ऋषिर्यजुश्छन्द आपो देवता अभिषेचने विनियोगः ।

**ॐ तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय इति ॥१॥**

अथ द्वितीयोदककुम्भात् पूर्ववत् **"येऽअप्स्वन्तरिति"** जलादानम् अभिषिञ्चने तु मन्त्रविशेषः ।

येनेति प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवता अभिषेचने विनियोगः ।

**ॐ येन श्रियमकृणुतां येनावमृशताꣳसुराम् ।**

**येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यशः ॥ २ ॥** इति ।

अथ तृतीयोदककुम्भात् **"येऽअप्स्वन्तरिति"** पूर्ववदपो गृहीत्वा-

आपो हि ष्ठेत्यादितिसृणां सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवता अभिषेचने विनियोगः ।

**ॐ आपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन । महे रणाय चक्षसे ॥३॥**

इत्यभिषिच्य ।

अथचतुर्थकुम्भात् **"षेऽअप्स्वन्तरिति"** पूर्ववज्जलमादाय -

**ॐ यो वः शिवतमो रसस्तस्य भाजयते ह नः ।**

**उशतीरिव मातरः** ॥४॥ इति सिञ्चेत् ।

अथ पञ्चमकुम्भात् **"षेऽअप्स्वन्तरिति"** पूर्वज्जलमादाय -

**ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥५॥**

इति अभिषिञ्चेत् ।

ततः षष्ठात् सप्तमात् अष्टमाच्चोदककुम्भात् **"षेऽअप्स्वन्तरिति"** मन्त्रेणापो गृहीत्वा तूष्णीम् अभिषेचनं कुर्यात् ।

## (ठ) सहस्रधारास्नानम्

ततोऽभिषेकावशिष्टेन जलेन सहस्रधारां शिरसि धृत्वा स्नायात् ।

## (ड) मेखलामोचनम्

अथ मेखलोन्मोकः । तत्र पूर्वधृतां मेखलां ब्रह्मचारी मन्त्रं पठन् स्वयमेव शिरोमार्गेण निस्सारयेत् ।

उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता मेखलोन्मोके विनियोगः ।

**ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय** ।

**अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम** ॥

मेखलान्मुच्य दण्डं निधायेति सूत्रात् साहचर्याच्च दण्डमजिनं च तूष्णीं निधाय आचामेत् । ततः उपकल्पितमन्यद्वासस्तूष्णीं परिधाय आचम्य आदित्यमुपतिष्ठते मन्त्रेण ।

## (ढ) सूर्योपस्थानम्

उद्यन्भ्राजभृष्णुरिति प्रजापतिर्ऋषिः शक्वरीछन्द आदित्यो देवता आदित्योपस्थाने विनियोगः ।

**ॐ उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय** ।

**उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमय** ।

**उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मा गमय** ।

इति मन्त्रेण ऊर्ध्वबाहुः सूर्योपस्थानं कुर्यात् ।

## (ण) दधितिलप्राशनम्

ततो दधितिलान् दक्षिणहस्तगतसोमतीर्थेन प्राश्य जटालोमनखानि वापयित्वा स्नात्वाऽऽचम्य ततः द्वादशाङ्गुल–दशाङ्गुल–अष्टाङ्गुलदीर्घेण कनिष्ठिकाग्रस्थूलेन उदुम्बरकाष्ठेन ब्राह्मणक्षत्रियविशां क्रमेण दन्तधावनं कुर्यात् ।

### (त) दन्तधावनम्

अन्नाद्यायेत्याथर्वणऋषिरनुष्टुप्छन्दः सोमो देवता दन्तधावने विनियोगः ।

**ॐ अन्नाद्याय व्यूहध्वꣳसोमो राजाऽयमागमत् ।**

**स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च** । ॥ इति ॥

### (थ) स्नानम्

तत आचम्य सुगन्धिद्रव्ययुक्तेन कटुतैलयवादिचूर्णेन शरीरोद्वर्तनं कृत्वा तप्तोदकेन सशिरस्कं स्नात्वाऽऽचम्य चन्दनाद्यनुलेपनं गृहीत्वा ग्रहवेदीसमीपमागत्य उपविश्य अनुलेपनेन हस्तावुपलिप्य नासिकयोर्मुखस्य चोपगृह्णीते मन्त्रेण ।

### (द) चन्दनोपसङ्ग्रहणम्

प्राणापानाविति प्रजापतिर्ऋषिर्यजुश्छन्दः प्राणापानादिलिङ्गोक्ता देवता चन्दनोपसङ्ग्रहणे विनियोगः ।

**ॐ प्राणापानौ मे तर्पय** । नासिकायाम् ।

**चक्षुर्मे तर्पय** । चक्षुषोः ।

**श्रोत्रं मे तर्पय** । श्रोत्रयोः । ॥ इति ॥

ततोऽपसव्यं विधाय पाणी प्रक्षाल्य तदवनेजनं दक्षिणाभिमुखः पितृतीर्थेन दक्षिणस्यां दिशि निषिञ्चेत् ।

पितर इति प्रजापत्यश्विसरस्वतीन्द्राऋषयो यजुश्छन्दः पितरो देवता निषेचने विनियोगः ।

**“ॐ पितरः शुन्धध्वम्”**

इति पाण्योरवनेजनजलं भूमौ निषिञ्चेत् । पित्र्यत्वात्सव्येनोदकस्पर्शः ।

ततश्चन्दनादिना सुगन्धिद्रव्येण गात्राण्यनुलिप्य **“सुचक्षा”** इति मन्त्रं जपेत् ।

### (ध) मन्त्रजपः

सुचक्षा इति प्रजापतिर्ऋषि यजुश्च्छन्दः लिङ्गोक्ता देवता जपे विनियोगः ।

**ॐ सुचक्षा अहमक्षीभ्यां भूयासꣳसुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति** ।

### (न) अधोवासः परिधानम्

अथोपकल्पितमहतं वासः परिधत्ते ।

परिधास्यै इत्याथर्वणऋषिः पंक्तिश्छन्दो वासो देवता वस्त्रपरिधाने विनियोगः ।

**ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि** ।

**शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये** ॥

### (प) उत्तरीयपरिधानम्

अथोत्तरीयम् । यशसामेत्याथर्वणऋषिः पंक्तिश्छन्दो लिङ्गोक्ता देवता उत्तरीयपरिधाने विनियोगः ।

**ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ।**

**यशो भगश्च माऽविन्दद्यशो मा प्रतिपद्यताम् ॥**

इति एक एव वासश्चेत्तदा पूर्वस्योत्तरवर्गेण आच्छादयीत ।

## (फ) द्वितीययज्ञोपवीतधारणम्

ततो द्विराचम्य द्वितीययज्ञोपवीतधारणं कुर्यात् । **"ब्रह्मचारिण एकं तु स्नातकस्य द्वे बहूनि वा"** इति वचनात् । धारणमन्त्रस्तु पूर्ववत् ।

## (ब) पुष्पमालाग्रहणम्

तत आचम्य सुमनसो गृह्णाति ।

या आहरदिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवता पुष्पग्रहणे विनियोगः ।

**ॐ याऽआहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय ।**

**ता अहं प्रतिगृह्णामि यशसा च भगेन च ।**

अथाबध्नीते ।

यद्यशोप्सरसामिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवता पुष्पमालाबन्धने विनियोगः ।

**ॐ यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु तेन संग्रथिताः सुमनस आवध्नामि यशो मयि ।**

## (भ) उष्णीषेण शिरोवेष्टनम्

अथोष्णीषेण शिरो वेष्टयेत् ।

युवा सुवासा इति अङ्गिराऋषिर्बृहतीछन्दो बृहस्पतिर्देवता शिरोवेष्टने विनियोगः ।

**ॐ युवा सुवासाः परिवीतऽआगात्स उ श्रेयान् भवति जायमानः ।**

**तं धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥**

## (म) अन्यानि कञ्चुकादीनि वासांसि कुण्डलादीनि अलङ्करणानि च

ततोऽन्यान्यपि कञ्चुकादीनि वासांसि परिधाय कर्णवेष्टकौ परिधत्ते ।

अलङ्करणमिति प्रजापतिर्ऋषिः यजुश्च्छन्द अलङ्करणं देवता अलङ्करणे विनियोगः ।

**ॐ अलङ्करणमसि भूयोऽअलङ्करणं भूयात् ।**

मन्त्रेण कुण्डले कर्णयोर्ददाति ।

अथाक्षिणो अञ्जने-

वृत्रस्येति प्रजापतिर्ऋषिर्यजुश्छन्दः अञ्जनं देवता अक्ष्यञ्जने विनियोगः ।

**ॐ वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहि ।**

### (य) आदर्शप्रेक्षणम्

तत आत्मानमादर्शे प्रेक्षते ।

रोचिष्णुरितिप्रजापतिर्ऋषिर्यजुश्छन्द आदर्शो देवता आदर्शप्रेक्षणे विनियोगः ।

**ॐ रोचिष्णुरसि** ।

### (र) छत्रग्रहणम्

ततश्छत्रं प्रतिगृह्णाति ।

बृहस्पतेश्छदिरिति गौतम ऋषिर्बृहतीछन्दः छत्रं देवता छत्रग्रहणे विनियोगः ।

**ॐ बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि तेजसो यशसो मामन्तर्द्धेहि** ॥

### (ल) उपानत्प्रतिमोके

तत उपानहौ युगपत्प्रतिमुञ्चते ।

प्रतिष्ठे स्थ इति जमदग्निर्ऋषिर्विराट्छन्दो लिङ्गोक्ता देवता उपानत्प्रतिमोके विनियोगः ।

**ॐ प्रतिष्ठेस्थो विश्वतो मा पातम्** ।

### (व) दण्डग्रहणम्

ततो वैणवं दण्डमादत्ते ।

विश्वाभ्य इति याज्ञवल्क्यऋषिर्यजुश्छन्दो दण्डोदेवता दण्डग्रहणे विनियोगः ।

**ॐ विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः** ।

इति मन्त्रेण दण्डग्रहणं कुर्यात् ।

॥ इति समावर्तनम् ॥

ततश्चतुः स्वस्त्यादि सर्वं कर्म समाप्य पूर्णपात्रादि दानं कुर्यात् ।

### (श) पूर्णपात्रदानम्

ॐ अद्येत्यादि देशकालौ स्मृत्वा अमुकगोत्र अमुकप्रवर अमुकशर्माहं विहितस्य समस्तकर्मणः परिपूर्णतासिद्धयर्थमिदं तण्डुलपूरितपूर्णपात्रं प्रजापतिदैवतं सुपूजिताय अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । (पूर्णपात्रपूर्वं देशान्तरम्[७*] श्रावयेत् ।)

७ ***अथ देशान्तरम्**

वशिष्ठ उवाच -

**गर्भाष्टमेऽष्टमे वापि व्रतबन्धे कृते द्विज ।**
**मातरं पितरं नत्वा गतो देशान्तरं सुतः ॥१॥**

सुत उवाच -

**श्रृणु मातर्मयोक्तं यदहं यास्ये वनान्तरे ।**
**यत्रैव शारदा देवी वरार्थे प्रार्थयाम्यहम् ॥२॥**
**गुरुसेवा कृते तस्मिन्काश्मीरे देशशोभने ॥**

विद्यासङ्ग्रहणं कृत्वा ह्यागमिष्ये पुनर्गृहम् ॥३॥

मातोवाच-

बालतोऽपि मया पुत्र पालितं कष्टतः सदा ॥
वृद्धावस्थात्वहं जाता पुत्र त्वं पालनं कुरु ॥४॥
इदं कर्म परित्यज्य कथं यास्यसि काननम् ॥

सुत उवाच -

ब्रह्मचर्ये कृते तस्मिन्गुरोः शुश्रूषपूर्वकम् ॥ ५॥
संस्नाप्य सर्वतीर्थेषु ह्यागमिष्ये पुनर्गृहम् ॥
उद्धरेत्सप्तगोत्राणि तीर्थानि भ्रमतो बहु ॥
आगमिष्ये तथा मातः पञ्चविंशतिमध्यतः ॥६॥

मातोवाच–

देशान्तरं महादुःखं महाघोरं च दारुणम् ।
शीतवातातपश्चैव क्षुत्तृड्भ्यां पीडचते सुत ॥७॥

पितोवाच-

कन्दमूलफलाहारं भूमिशय्या निरालयम् ॥
वने कष्टं सदादुःखं गृहे तिष्ठ सदा सुत ॥८॥

सुत उवाच -

धन्या माता पिता धन्यो यस्य पुत्रो व्रताश्रितः ॥
पितॄणां तारको यस्तु दशपूर्वं दशापरम् ॥९॥

मातोवाच -

देशान्तरं न याहीति महाघोरं च दारुणम् ॥
दुर्गमं पर्वतं शैलं दुर्गमं च हिमालयम् ॥१०॥

पितोवाच -

सिंहव्याघ्रोगजक्रोडचौरतस्करकैर्वृतम् ।
बहुकष्टं निराहारो न याहीति वनान्तरम् ॥११॥

सुत उवाच -

जातोऽहं ब्रह्मवंशेऽस्मिन् कुलीनस्तव पुत्रकः ॥
करिष्येऽहं व्रतं सर्वं पितृवर्गस्य तारणम् ॥१२॥

पितोवाच -

कष्टेन पालितः पुत्र आत्मार्थे तु मया सुतः ।
त्वयि देशान्तरे याते मम पुत्रक का गतिः ॥१३॥

मातोवाच -

दश मासे धृते गर्भे जितं निद्राक्षुधादिकम् ।
त्वयि देशान्तरे याते का गतिर्मम पुत्रक ॥१४॥

सुत उवाच -

पञ्चविंशे च सम्पूर्णे वनवासी जितेन्द्रियः ॥
व्रतं करिष्ये येनैव तेन तारयते पितृन् ॥१५॥

मातोवाच -

दुर्गमं पर्वतं शैलं दुर्गमं च हिमालयम् ॥
दुर्गमा शारदा देवी दुर्गमं वनगह्वरम् ॥१६॥

पितोवाच -

दुर्गमः काश्मीरो देशो विद्यासङ्ग्रहणं तथा ॥
दुर्गमा गुरुसेवा च देशे देशे च दुर्गमम् ॥१७॥
मां त्यक्त्वाऽतो न याहीति बालबुद्धिपरिग्रह ।

## (ष) गोदानम्

तत आचार्यं सम्पूज्य वरं दद्यात्। (गौर्ब्राह्मणस्य वरमुच्यते)

सङ्कल्पः

अद्येहामुकोऽहं मम कृतस्य समावर्तनकर्मणः साङ्गतासिद्ध्यर्थं (साद्गुण्यार्थम्) इमां गां गोनिष्क्रयीभूतं सुवर्णं वा वररूपेणाचार्याय तुभ्यं संप्रददे। इति।

---

**त्वां विना मम वंशस्य नाशमायाति पुत्रक ॥१८॥**

सुत उवाच -

**द्वादशे वर्षसम्पूर्णे गुरुसेवा कृते मया ॥**
**आगमिष्ये व्रते पूर्णे पुनश्च स्वगृहं प्रति ॥१९॥**

मातोवाच -

**गृहे सत्यं गृहे धर्मो गृहे चेन्द्रियनिग्रहः ॥**
**गृहे विद्या गृहे लक्ष्मीर्गुरुसेवा गृहे भवेत् ॥२०॥**

पितोवाच -

**गुरुः स्वगुरुरेवान्ये गुरवश्चैव बान्धवाः।**
**तेषां वाक्यावमानेन दुःखं चैव पदे पदे ॥२१॥**
**गतेऽरण्ये त्वयि प्राप्ते रुदन्ति पितृमातरः ॥**
**महाभारं परित्यज्य कथं यातोऽसि मे सुत ॥२२॥**
**रुदन्ति बान्धवाः सर्वे हाहा बालकुमारकः।**
**रुदन्ति गुरवस्तत्र स्वजनाः भृत्यवर्गकाः ॥२३॥**

आचार्य उवाच -

**देहि पित्रोरिदं कष्टं किं स्वर्गं पितृदैवतम्।**
**का गतिश्च भवेत्पुत्र पित्रोः सन्तोषणं विना ॥ २४ ॥**
**माता गङ्गा समा तीर्थं पिता पुष्करमेव च।**
**गुरुः केदारकं तीर्थं माता तीर्थं पुनः पुनः ॥ २५ ॥**
**माता तीर्थं पिता तीर्थं तीर्थं स्वजनबान्धवाः ॥**
**वचने वचने तीर्थं गुरुमभ्यागतं परम् ॥ २६ ॥**
**एतद्वाक्यं ममैवोक्तं जानीहि हितकारणम् ॥**
**उत्साहं वृद्धिमाङ्गल्यं कुरु पुत्र गृहे वसन् ॥ २७ ॥**
**हर्षिता यस्य माता च पिता हर्षेण संयुतः।**
**सहर्षा बान्धवा भृत्या वादित्रं बहुवादितम् ॥ २८ ॥**
**भक्ष्यं भोज्यं लेह्य पेयं चोष्यं च विविधं रसम्।**
**भोगं तु कारयामास बालकं परिचारकाः ॥ २९ ॥**
**भरणं पोषणं चैव भोजनं रससंयुतम्।**
**कारितामेव भो तात पितृदेव नमोऽस्तु ते ॥ ३० ॥**
**गुरुणा सर्वशास्त्राणि दत्तानि ज्ञानवृद्धये ॥**
**गुरुसन्तोषणार्थाय दक्षिणां दातुमुत्सहे ॥ ३१ ॥**
**द्वादशो वार्षिकश्चैव व्रतपूर्णाय दक्षिणा ॥**
**हिताय मम भो तात दीयते गौः सदक्षिणा ॥ ३२ ॥**

॥ इति देशान्तरं शुभम् ॥

तत आचार्यमुखात् स्नातको नियमान्[८♥] श्रृणुयात् ।

## (स) भूयसीदक्षिणा

ततो भूयसीं सङ्कल्प्येत् ।

अद्येहेत्यादि अमुकोऽहममुकनाम्नो ब्रह्मचारिणश्चूडोपनयनवेदारम्भसमावर्तनकर्मणां न्यूनातिरिक्तपरिपूर्त्यर्थं साद्गुण्यार्थम् इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये । तथा एतत्कर्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं यथोपपन्नेन सिद्धान्नेनामान्नेन वा यथासङ्ख्यकान् ब्राह्मणान्भोजयिष्ये । ॥ इति ॥

---

८ ♥**स्नातकस्य नियमाः**

स्नातकस्य नियमान् वक्ष्यामः इति सूत्रम् । नृत्यगीतवादित्राणि न कुर्यात् । नृत्यं तालाद्यनुकार्यगविक्षेपः । गीतं तालोपनिबद्धषड्जादिस्वरविशेषरागध्वनिः । वादित्रं तालाद्यनुकारिचतुर्विधम् । एतानि स्वयं न कुर्यात् । नृत्यादिप्रयुक्तानन्यान् द्रष्टुं च न गच्छेत् । क्षेमे रात्रौ ग्रामान्तरं न गच्छेत् । क्षेमे राजादिभयराहित्ये सति रात्रौ ग्रामाद् ग्रामान्तरं न गच्छेत् न च धावेत् । उदपानावेक्षणवृक्षारोहरणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलंघनशुक्रवचनसन्ध्यादित्यप्रेक्षणभिक्षणानि न कुर्यात् । अस्यार्थः - उदपानं कूपादि तस्योपरिष्टात्कौतुकादिना अधोमुखो भूत्वा अवेक्षणं दर्शनं न कुर्यात् । वृक्षारोहणं शिखराद्यारोहणं फलप्रपतनं वृथाऽपक्वफलत्रोटनम् । सन्धिसर्पणं सन्धिः कुद्वारं जीर्णद्वारं तेन सर्पणं गमनं न कुर्यात् । यद्वा सन्ध्यासु सन्ध्यामनुपास्य सर्पणमध्वगमनं न कुर्यात् । अथवा अनुरक्तयोः पुत्रजनकयोः मित्रयोः दंपत्योः भ्रात्रोर्वा ऐक्यं सन्धिस्तत्र भेदाय मध्ये गमनं न कार्यम् । विवृतस्नानं- नग्नस्नानं विषमलंघनं- पर्वतगर्त्तादिलङ्घनं शुक्रवचनं- लज्जाकरामङ्गलकरदुःखकरेति त्रिविधं निष्ठुरवाक्यं सन्ध्यादित्यप्रेक्षणं- त्रिषु सन्ध्यासु आदित्यावलोकनं तदुक्तं -

**नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कथञ्चन ।**
**नोपरक्तं न वारिस्थं न मध्ये नभसोगतम्** ॥ इति ।

भिक्षणं सिद्धान्नयाचनम् एतानि क्षेमे सति न कुर्यात् । वर्षत्यप्रावृतो ब्रजेत् । देवे इन्द्रे वर्षति सति सूर्ये तपति सति अप्रावृतः अनाच्छादितः सन् - अयमिति प्रजापतिर्ऋषिर्जगतीछन्दः बज्रो देवता वृष्टिजपे विनियोगः । **ॐ अयम्मे वज्रः पाप्मानमपहनत्** । इमं मन्त्रं पठन् ब्रजेत् गच्छेत् । अप्स्वात्मानं न वीक्षेत् । अप्सु जलेषु आत्मानं प्रतिबिम्बितं मुखं न पश्येत् । तच्च तैलादिष्वप्युपलक्षणं घृते तु छायादर्शनं कर्त्तव्यमेव । अजातलोम्नीं विपुंसी षण्ढं च नोपहसेत् । अजातलोम्नीं समयेऽप्यनुत्पन्नलोम्नीं विपुंसी पुरुषचिह्नां श्मश्वादियुक्तां स्त्रियं नोपहसेत् न च गच्छेत् । षण्ढं नपुंसकं च नोपहसेत् दोषाधिक्यायैतत् । न गच्छेद् गुर्विणीं षण्मासोपरि सद्यःप्रसूतां रजस्वलां निवृत्तरजस्कां वृद्धां च नोपगच्छेत् । विजन्येति गुर्विणीं प्रतिब्रूयात् । सकुलमिति नकुलं ब्रूयात् । कपालं कर्परं मनुष्यादिशिरः भगालमिति ब्रूयात् । इन्द्रधनुर्मणिधनुरिति ब्रूयात् । गां धयन्तीं परस्मै नाचक्षीत । स्ववत्सं पाययन्तीं गां गौस्ते पाययति वत्समिति परस्मै न वदेत् । उर्वरायां सस्यवत्यां भूमौ उत्सर्पन् गच्छन् तिष्ठन् मूत्रपुरीषे न कुर्यात् । एतच्च फालकृष्ट भूमिमार्ग जीर्णदेवायतन प्राणितर्त्तादीनां अप्युपलक्षणार्थम् । स्वयं प्रशीर्णेन त्रुटितेन अयज्ञीयेन काष्ठेन गुदं प्रमृजीत तच्च लोष्ठादीनामप्युपलक्षणार्थम् । विकृतं वासो स्मृतिशिष्टाचाराभ्यां विरुद्धं नील्यादिरक्तवासो न परिदधीतेत्यर्थः । पालाशादिपुष्परक्तं काषायं वासस्तु परिदध्यादेव उपनिषद्वद्धं चैतत् काषायस्य प्राशस्त्यात् । दृढव्रतो वधत्रः स्यात् । दृढं स्थिरं प्रारब्धं कर्म यस्य असमाप्तकर्मा न स्यादित्यर्थः । वधात् घातान् आत्मानं त्रायते इति वधत्रः तच्च श्रृङ्गिनखिदंष्ट्रिभ्यः सम्भवति तेभ्यो रक्षां कुर्वीतेत्यर्थः । सर्वत आत्मानं गोपायेत् । सर्वेषां स्वेषां परेषां वा मित्रमिव भूयात् । मैत्रो ब्राह्मण उच्यते । इति स्मरणात् । इतिसाधारणशिक्षानियमाः ॥

अथ समावर्त्तनानन्तरं त्रिरात्रनियमाः - अमांसाशी भवेत् । मांसं न भक्षयेत् । अमृण्मयपायी । मृण्मयेन पात्रेण जलं न पिबेत् । एतच्चालाबुतुम्ब्यादीनामुपलक्षणम् । स्त्रीशूद्रशवकृष्णशकुनिशुनामदर्शनमसंभाषणं च । स्त्री नारी शूद्रश्चतुर्थो वर्णः, शवो मृतकः, कृष्णशकुनिः काकः, श्वा कुक्कुरः, एतेषां दर्शनं भाषणं च त्रिरात्रं वर्जयेत् । शवशूद्रसूतकान्नानि नाद्यात् । शवान्नं मृतसूतकान्नं शूद्रान्नं सूतकान्नं जाताशौचकान्नं च नाद्यात् । मूत्रपुरीषष्ठीवनानि आतपे सूर्यसंमुखे न कुर्यात् । सूर्याच्चात्मानं नान्तर्दधीत । छत्रवस्त्रादिना आत्मानं शरीरं न गोपायेत् । तप्तोदकेनार्थान्कुर्वीत । शौचादीन् तप्तजलेन कुर्यादित्यर्थः । अवज्योत्य रात्रौ भोजनं कुर्यात् । दीपादिप्रज्वलय्य भोजनं कुर्यान्नान्धकार इत्यर्थः । सत्यमेव वचनं वदेत् । अनृतं मिथ्याभाषणं न कुर्यात् । एवं शिक्षयित्वा एतान्नियमान् करिष्यामीति वटुमवधार्य आश्वर्यः एनं वटुं स्वपादयोः पातयित्वा पूर्णाहुतिं जुहुयात् ।

## (ह) नवग्रहादीनां विसर्जनं कर्मसर्वाङ्गपूर्त्यै विष्णोः स्मरणञ्च

नवग्रहादीनां विसर्जनमन्त्रः

**ॐ उस्रावेतं धूर्षाहौ युज्येथामनश्रूऽअवीरहणौ ब्रह्मचोदनौ ।**
**स्वस्ति यजमानस्य गृहान् गच्छतम् ॥**
**यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।**
**इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥**
**गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।**
**यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥** इति ॥

अथ कर्मसर्वाङ्गपूर्त्यै ॐ तत्सत् ।

**यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**
**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥** ॐ अच्युताय नमः ३ ।
**प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**
**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादितिश्रुतिः ॥** ॐ विष्णवे नमः ३ ।

ब्राह्मणेभ्यो दक्षिणां दत्वा अभिषेकतिलकरक्षाबन्धनादिकं कुर्यात् ।

### शब्दार्थाः

| | | |
|---|---|---|
| हरिद्रा | = | बेसार |
| मङ्गलद्रव्याणि | = | माङ्गलिक पदार्थहरू |
| क्षिप्त्वा | = | राखेर, फ्याँकेर |
| पोटलिका | = | पोको |
| निर्ममेत् | = | बनाओस् |
| अहते वाससी | = | पछारेको धोती र उपर्ना |
| शाला | = | घर, भवन, मण्डप |
| त्र्येणी शलली | = | तीनठाउँमा सेतो भएको दुम्सीको काँडो |
| क्षुरः | = | छुरा |
| आनडुहम् | = | वाच्छाको (वहरको) |
| गोमयम् | = | गोवर |
| नवनीतं घृतम् | = | नौनी घिउ |
| नापितः | = | हजाम, नाउ, केश काट्ने मानिस |
| आर्द्रीकृत्य | = | भिजाएर |

| | | |
|---|---|---|
| वपनार्थम् | = | केश काट्न वा मुन्डन गर्नका लागि |
| पल्वले | = | तलाउमा |
| अङ्के | = | काखमा |
| परिष्कृतम् | = | संस्कार गरिएको |
| तिग्मधारम् | = | धारिलो वा तिखो धार भएको |
| ताम्रमयः | = | तामाको |
| लौहः | = | फलाम |
| उन्दनम् | = | भिजाउनु |
| विनयनम् | = | पृथक् पृथक् गर्नु वा अलग पार्नु |
| कुशतरुणान्तर्धानम् | = | कुशका टुक्रा केशभित्र राख्नु |
| निक्षेपणम् | = | फ्याँक्नु |
| कौपीनम् | = | लँगौटी |
| अजिनम् | = | मृगचर्म |
| मेखला | = | कन्धनी, काञ्ची |
| माणवकः | = | वटुक, बालक |
| अञ्जलिः | = | अन्जुली |
| आलम्भनम् | = | छुनु |
| प्रैषवाक्यानि | = | शिक्षाका वचनहरू |
| अभिवादनम् | = | दण्डवत्, प्रणाम, नमस्कार |
| विमार्जनम् | = | धुनु वा पखाल्नु |
| आलम्बनम् | = | आश्रय, सहारा, अवलम्ब |
| अग्निपरिसमूहनम् | = | अग्निलाई समृद्ध (शक्तिशाली) गराउनु |
| मुखविमर्शनम् | = | मुख पुछ्नु |
| अङ्गालम्भनम् | = | शरीरका अङ्गहरूलाई छुनु |
| मेखलामोचनम् | = | मेखला फुकाउनु |
| प्राशनम् | = | खानु |
| शिरोवेष्टनम् | = | टोपी, फेटा |
| कञ्चुकम् | = | कोट, चोलो |
| कुण्डलम् | = | कुण्डल |
| आदर्शम् | = | ऐना |
| प्रेक्षणम् | = | हेर्नु |

| | | |
|---|---|---|
| ग्रहणम् | = | लिनु |
| प्रतिमोकम् | = | फुकाउनु |
| उपानहौ | = | जुत्ता |
| प्रतिमुञ्चते | = | फुकाल्छ |
| सन्धिसर्पणम् | = | जीर्णद्वारगमन, वा भत्केका थोत्रा ढोकामा जाने काम |
| समावर्तनम् | = | स्नान |
| उत्सर्पन् | = | हिँड्दै |
| अमांसाशी | = | मासु नखाने |
| भवेत् | = | होओस् |

## अभ्यासार्थाः प्रश्नाः

१. **जूटिकाबन्धने पोटलिकायां कानि द्रव्याणि निक्षिप्यन्ते ?**

२. **चूडायामावश्यकान्युपकरणानि कानि ?**

३. **चूडोपनयनादिकर्मसु ब्राह्माणानामाचार्यः को भवति ?**

४. **अस्मिन् कर्मणि आचार्यो वटुं किं शिक्षयति ?**

५. **गुरोरभिवादनप्रकारो वर्ण्यताम् ?**

६. **ॐ इयं दुरुक्तं परिवाधमाना ... मन्त्रोऽयं कस्मिन् कर्मणि विनियुज्यते ?**

७. **सूत्रानुसारं ब्राह्मणस्य भिक्षायाचनवाक्यं प्रदर्शयत ?**

८. **ब्रह्मचारिणे कथं वेदोऽध्यापनीयः ?**

९. **केऽध्ययननियमाः ?**

१०. **समावर्तनकर्मणि विशेषोपकल्पनीयानि वस्तूनि कानि ?**

११. **समावर्तनकर्मणि अग्नेर्नाम किम् ? पूजनमन्त्रश्च कः ?**

१२. **यथाग्रन्थं मेखलाबन्धनविधिं वर्णयत ।**

१३. **वटुः कं मन्त्रं पठन् कस्मिन्मार्गेण मेखलां मोचयति निस्सारयति वा ?**

१४. **ब्राह्मणक्षत्रियविशां दन्तधावनकाष्ठं तस्य प्रमाणञ्च प्रदर्शयत ?**

१५. **यशसा मा द्यावापृथिवी ... ॥ यज्ञोपवीतं ... ॥ मन्त्रयोरनयोर्विनियोगस्थलं निर्दिश्यताम् ?**

१६. **सूत्रानुसारं स्नातकस्य नियमान् वर्णयत ?**

१७. **किमर्थं शिखारक्षणं केशादिकर्तनञ्च कर्तव्यम् ? ग्रन्थाधारेण प्रस्तूयत ।**

१८. **चूडाकर्म कदा भवति ? शास्त्रवचनानि च विलिखत ।**

१९. **आघाराज्यभागदेवानां नामानि लिखत ।**

२०. **त्रैवर्णिकानाम् उपनयनकालो ग्रन्थाधारेण प्रदर्शयत ।**

२१. पञ्चभूसंस्काराणां नामानि लिखत ।

२२. विनियोगपूर्वकं वासःपरिधापनमन्त्रं प्रस्तूयत ।

२३. मेखलाबन्धनविधिं लिखत ।

२४. यज्ञोपवीतं धार्यते- दक्षिणांसोपरि, वामांसोपरि, कण्ठे ।

२५. ब्राह्मणः चर्म धारयति- रौरवं, ऐणेयम्, बस्तचर्म ।

२६. दण्डप्रमाणं तस्य जातं च विलिख्य सविनियोगं मन्त्रं प्रदर्शयत ।

२७. हृदयालम्भनमन्त्रं ग्रन्थाधारेण लिखत ।

२८. असञ्चरशब्दस्य कोऽर्थः ?

२९. उपयमनकुशाः भवन्ति- त्रयः, पञ्चाशत्, त्रयोदश ।

३०. पात्रासादनप्रकारो लेखनीयः ।

३१. यथाग्रन्थं स्रुवसंस्कारं वर्णयत ।

३२. त्रैवर्णिकानां सावित्रीदानप्रकारं प्रतिपादयत ।

३३. अधीतानिराकरणे वटुः किं वाचयति ?

३४. समन्त्रं समिदाधानप्रकारं विलिखत ।

३५. मान्यजनाभिवादने स्मृतिप्रमाणं किम् ?

३६. अभिवादनानर्हाः के ? श्लोकाधारेण लिखत ।

३७. ब्रह्मचारिणो नियमान् प्रदर्शयत ।

३८. वेदारम्भविषये महर्षेः गौतमस्य को विचारः ?

३९. स्मृतिवाक्यप्रदर्शनपूर्वकं समावर्तनकालं निरूपयत ।

४०. अग्निपरिसमूहनवाक्यानि कानि ?

४१. कैः मन्त्रैः मुखविमर्शनं क्रियते ?

४२. अष्टकलशेषु प्रतिकलशं केषां देवानां पूजनं भवति ? यथाक्रमं विलिखत ।

४३. क्षत्रियो दीर्घेण उदुम्बरकाष्ठेन दन्तधावनं करोति- दशाङ्गुल, अष्टाङ्गुल, द्वादशाङ्गुल ।

४४. ॐ युवा सुवासा ... ॥ मन्त्रोऽयं कस्मिन् कर्मणि विनियुक्तः ।

४५. स्नातकस्य नियमान् प्रतिपादयत ।

नवमः पाठः

# एकोद्दिष्टश्राद्धम्

**एकोद्दिष्दश्राद्धम्। तत्रादौ तर्पणविधिः**

## (क) प्रथमं प्रायश्चित्तगोदानम्

कर्ता शुचिरासने उपविश्याचम्य गां ब्राह्मणं च संपूज्य गोपुच्छोदकेन स्वशिरसि अभिषिञ्चेत्।

तद्यथा

**ॐ मनो मे र्तपयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान् मे तर्पयत गणा मे मा वितृषन्॥**

ततः कुशतिलजलान्यादाय सङ्कल्पं कुर्यात्।

हरि ॐ तत्सत् ३ ॐ विष्णु ३ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य अमुकगोत्रः अमुकप्रवरः शुक्लयजुर्वेदमाध्यन्दिनीयवाजसनेयशाखाध्यायी अमुकशर्माहं (वर्माहं गुप्तोहम्) सकलपापक्षयपूर्वकं श्रीपरमेश्वरप्रीत्यर्थम् अमुकगोत्रस्य (गोत्रायाः) अस्मत्पितुः (मातुः) अमुकशर्मणो वसुस्वरूपस्य (अमुकनाम्नीदेव्यायाः वसुस्वरूपायाः) अद्यकर्तव्य सांवत्सरैकोद्दिष्टक्षयाहश्राद्धकर्तृत्वाधिकारसिद्धये पूर्वदिने भक्ष्याभक्ष्यस्पृश्यास्पृश्यचोष्याचोष्यादिसकलप्रत्यवायपरिहारपूर्वककर्माधिकारार्थं देहशुद्ध्यर्थं भूमि-शुद्ध्यर्थञ्च इमां सर्वप्रायश्चित्तप्राजापत्यानुकल्पीभूतां गां तत्प्रत्याम्नायीभूतं व्यवहारोपकल्पितं द्रव्यं लोष्टादिकं वा रुद्रदैवतां (विष्णुदैवतां वा) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय प्रायश्चित्तगोदानत्वेन तुभ्यमहं संप्रददे। ॐ स्वस्ति इति प्रतिवचनम्।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी।**
**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे॥**
**गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्॥**

ततो दानप्रतिष्ठा

ॐ अद्य कृतैतत् सर्वप्रायश्चित्तनिमित्तकगोदानकर्मणः (गोप्रत्याम्नायीभूत द्रव्यदानकर्मणो वा) प्रतिष्ठासाङ्-गतासिद्ध्यर्थम् इमां दानप्रतिष्ठाद्रव्यं रौप्यखण्डं चन्द्रदैवतं सुपूजिताय अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं संप्रददे। **कोदात् कस्माऽअदा**दिति प्रतिग्रहीता वदेत्।

## (ख) प्रतिज्ञासङ्कल्पः

कुशतिलजलान्यादाय

हरि ॐ तत्सत् ३ ॐ विष्णुः ३ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य अमुकगोत्रः अमुकप्रवरः अमुकशाखाध्यायी अमुकशर्माहं (वर्माहं गुप्तोहं) अमुकगोत्रस्य (गोत्रायाः) अस्मत्पितुः (मातुः) अमुकशर्मणो (अमुकनाम्नी देव्याः) वसुस्वरूपस्य (वसुस्वरूपायाः) नित्यतर्पणाङ्गत्वेन (एकोद्दिष्टश्राद्धाङ्गत्वेन, पार्वणश्राद्धाङ्गत्वेन वा) श्रीमत्परमेश्वरप्रीतये देवर्षीणां मनुष्याणां दिव्यपितृणां स्वपितृणां च तर्पणमहं करिष्ये ।

*॥ इति सङ्कल्प्य ॥*

## (ग) देवर्षितर्पणम्

उपवीति प्राङ्मुखः कुशपाणिर्देवतीर्थवर्तिना यवकुशोदकेन विश्वान् देवानावाह्य तर्पयेत् ।

**ॐ विश्वेदेवासऽआगत शृणुतामऽइमꣳहवम् । एदं बर्हिर्निषीदत ॥**

**ॐ विश्वेदेवाः शृणुतेमꣳहवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ।**

**येऽअग्निजिह्वाऽउतवा यजत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम् ॥**

इति मन्त्रद्वयं पठित्वा

ॐ भूर्भुवः स्वः ब्रह्मादयो देवा इहागच्छन्तु हइ तिष्ठन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् ।

ॐ ब्रह्मा तृप्यताम् । ॐ विष्णुस्तृ... । ॐ रुद्रस्तृ... । ॐ प्रजापतिस्तृ... ।

ॐ देवास्तृप्यन्ताम् । ॐ छन्दांसि तृ... । ॐ वेदास्तृ... । ॐ ऋषयस्तृ... ॥

ॐ पुराणाचार्यास्तृ... । ॐ गन्धर्वास्तृ... । ॐ इतराचार्यास्तृ... । ॐ संवत्सरसावयवस्तृप्यताम् । ॐ देव्यस्तृप्यन्ताम् । ॐ अप्सरसस्तृ.. । ॐ देवानुगास्तृ... । ॐ नागास्तृ ... । ॐ सागरास्तृ... । ॐ पर्वतास्तृ... । ॐ सरितस्तृ... । ॐ मनुष्यास्तृ... । ॐ यक्षास्तृ... । ॐ रक्षांसि तृ... ।

ॐ पिशाचास्तृ... । ॐ सुपर्णास्तृ... । ॐ भूतानि तृ... । ॐ पशवस्तृ... । ॐ वनस्पतयस्तृ... ।

ॐ ओषधयस्तृ... । ॐ भूतग्रामचतुर्विधस्तृप्यताम् । ॐ मरीचिस्तृप्यताम् । ॐ अत्रिस्तृ... ।

ॐ अङ्गिरास्तृ ... । ॐ पुलस्त्यस्तृ... । ॐ पुलहस्तृ... । ॐ क्रतुस्तृ... । ॐ प्रचेतास्तृ... ।

ॐ वसिष्ठस्तृ... । ॐ भृगुस्तृ... । ॐ नारदस्तृ... ।

*॥ इति देवर्षितर्पणम् ॥*

## (घ) मनुष्यतर्पणम्

ततः कण्ठे सूत्रं कृत्वा निवीती उदङ्मुखः कायतीर्थवर्तिना सकुशोदकेनाञ्जलौ तिरश्च कुशान् कृत्वा मनुष्यांस्तर्पयेत् ।

ॐ भूर्भुवः स्वः सनकादयः सप्तमनुष्या इहागच्छन्त्विह तिष्ठन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् ।

ॐ सनकस्तृप्यताम् २ । ॐ सनन्दनस्तृ... २ ॐ सनातनस्तृ.. २ । ॐ कपिलस्तृ... २ ।

ॐ आसुरिस्तृ... २ । ॐ वोढुस्तृ... २ । ॐ पञ्चशिखस्तृ... २ ।

*॥ इति मनुष्यतर्पणम् ॥*

## (ङ) दिव्यपितृतर्पणम्

ततोऽपसव्येन प्राचीनावीती दक्षिणामुखः पातितवामजानुर्मोटितकुशतिलाञ्जलित्रयेण पितृतीर्थेन खड्गपात्रेण च दिव्यपितॄनावाह्य तर्पयेत् ।

**ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।**

**उशन्नुशतऽआवह पितॄन् हविषेऽअत्तवे ॥**

**ॐ आयन्तु नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ।**

**अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु तेवन्त्वस्मान् ॥**

इति मन्त्रद्वयं पठित्वा–

**ॐ कव्यवाडनलादयो दिव्यपितर इहागच्छन्त्विह तिष्ठन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् ।**

ॐ कव्यवाडनलस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ । ॐ सोमस्तृ ... ३ ।

ॐ यमस्तृ... ३ । ॐ अर्यमा तृ... ३ । ॐ अग्निष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः ३ । ॐ सोमपास्तृ ... ३ । ॐ बर्हिषदस्तृ... ३ । ॐ यमाय नमः ३ ।

ॐ धर्मराजाय नमः ३ । ॐ मृत्यवे नमः ३ । ॐ अन्तकाय नमः ३ ।

ॐ वैवस्वताय नमः ३ । ॐ कालाय नमः ३ । ॐ सर्वभूतक्षयाय नमः ३ ।

ॐ औदुम्बराय नमः ३ । ॐ दध्नाय नमः ३ । ॐ नीलाय नमः ३ ।

ॐ परमेष्ठिने नमः ३ । ॐ वृकोदराय नमः ३ । ॐ चित्राय नमः ३ ।

ॐ चित्रगुप्ताय नमः ३ ।

*॥ इति दिव्यपितृतर्पणम् ॥*

## (च) स्वपितृतर्पणम्

तत आगच्छन्तु मे पितर इमान् गृह्णन्त्वेताञ्जलाञ्जलीनिति पितॄनावाह्य तर्पयेत् ।

**ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ।**

**असुं य ईयुरवृकाऽऋतज्ञास्ते नोवन्तु पितरो हवेषु ॥**

ॐ अद्येहामुकगोत्रोऽस्मत्पिताऽमुकशर्मा वसुस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति प्रथमाञ्जलिं पित्रे दद्यात् ।

**ॐ अङ्गिरसो नः पितरोनवग्वाऽअथर्वाणो भृगवः सोम्यासः ।**

**तेषां वयꣳसुमतौ यज्ञियानामपिभद्रे सौमनसे स्याम ॥**

अनेन मन्त्रेण पूर्ववद् द्वितीयाञ्जलिं पित्रे दद्यात् ।

**ॐ आयन्तु नः पितरः सोम्यासोग्निष्वाताः पथिभिर्देवयानैः ।**

**अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु तेवन्त्वस्मान्** ।

अनेन मन्त्रेण पूर्ववत् तृतीयाञ्जलिं पित्रे दद्यात् ।

**ॐ ऊर्जं वहन्तीरमृतं घृतम्पयः कीलालं परिस्रुतम्** ।

**स्वधास्थ तर्पयत मे पितॄन्** ।

ॐ अद्येहामुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्रस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति पितामहाय प्रथमाञ्जलिं दद्यात् ।

**ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः**

**प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः** ।

**अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम्** ॥

अनेन मन्त्रेण पितामहाय पूर्ववद् द्वितीयाञ्जलिं दद्यात् ।

**ॐ ये चेह पितरो ये च नेहयांश्च विद्म याँ२ऽउ च न प्रविद्म** ।

**त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳसुकृतञ्जुषस्व** ॥

अनेन मन्त्रेण पितामहाय पूर्ववत्तृतीयाञ्जलिं दद्यात् ।

**ॐ मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः** ।

**माध्वीर्नः सन्त्वोषधीः** ॥

ॐ अद्येहामुकगोत्रोऽस्मत् प्रपितामहोऽमुकशर्मा आदित्यस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति प्रपितामहाय प्रथमाञ्जलिं दद्यात् ।

**ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः** ।

**मधु द्यौरस्तु नः पिता** ॥

अनेन मन्त्रेण प्रपितामहाय द्वितीयाञ्जलिं दद्यात् ।

**ॐ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः** ।

**माध्वीर्गावो भवन्तु नः** ॥

अनेन मन्त्रेण प्रपितामहाय पूर्ववत्तृतीयाञ्जलिं दद्यात् ।

**ॐ आमा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे** ।

**आ मा गन्तां पितरामातरा चामा सोमोऽअमृतत्त्वेन गम्यात्** ॥

इति मन्त्रं पठित्वा,

ॐ अद्येहामुकगोत्रास्मन्माताऽमुकीदेवी वसुस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ।

इति अञ्जलित्रयं दद्यात् ।

ॐ अद्येहामुकगोत्रास्मत्पितामही (अमुकी) देवी रुद्रस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ।
इति त्रिः ।

ॐ अद्येहामुकगोत्रास्मत्प्रपितामही (अमुकी) देवी आदित्यस्वरूपा तृप्यतामिदं तिलोदकं
तस्यै स्वधा । इति त्रिः ।

**ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासः ।**

ॐ अद्येहामुकगोत्रोऽस्मन्मातामहोऽमुकशर्मा वसुस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा ।

इति प्रथमाञ्जलिं मातामहाय दद्यात् ।

एवं '**ॐ नमो वः**' इति मन्त्रेण द्वितीयतृतीयाञ्जली मातामहाय दद्यात् ।

पुनः '**ॐ नमो वः**' इति मन्त्रं पठित्वा–

ॐ अद्येहामुकगोत्रोऽस्मत्प्रमातामहोऽमुकशर्मा रुद्रस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा ।

इति प्रमातामहाय प्रथमद्वितीयतृतीयाञ्जलीन् दद्यात् ।

पुनः '**ॐ नमो वः**' इति मन्त्रं पठित्वा–

ॐ अद्येहामुकगोत्रोऽस्मद्वृद्धप्रमातामहोऽमुकशर्मा आदित्यस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा ।

इति वृद्धप्रमातामहाय प्रथमद्वितीयतृतीयाञ्जलीन् दद्यात् ।

ॐ अद्येहामुकगोत्रास्मन्मातामही (अमुकी) देवी वसुस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा । इति त्रिः ।

ॐ अद्येहामुकगोत्रास्मत्प्रमातामही (अमुकी) देवी रुद्रस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ।
इति त्रिः ।

ॐ अद्येहामुकगोत्रास्मद् वृद्धप्रमातामही (अमुकी) देवी आदित्यस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ।
इति त्रिः ।

ततः श्लोकानुसारेण ज्येष्ठकनिष्ठादीन्सपत्नीकांश्च तर्पयेत्

**तताम्बात्रितयं सपत्नजननी मातामहादित्रयं ।**
**सस्त्रि स्त्री तनयादि तातजननीस्वभ्रातरः सस्त्रियः ॥**
**तताम्बात्मभगिन्यपत्यधवयुग् जायापिता सद्गुरुः ।**
**शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥**
**ॐ आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।**
**तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥**
**पितृवंशे मृता ये च मातृवंशे तथैव च ।**
**गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥**

**ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥**

**ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः ॥**

**ते सर्वे तृप्तिमायान्तु मद्दत्तेनाम्बुनाखिलाः**

**देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ॥**

**पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ।**

**जलेचरा भूमिचरा वाय्वाहाराश्च जन्तवः ॥**

**ते तृप्तिमखिला यान्तु मद्दत्तेनाम्बुनाखिलाः ।**

**नरकेषु समस्तेषु यातनासु च ये स्थिताः ॥**

**तेषामाप्यायनायैतद्दीयते सलिलं मया ।**

**अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥**

**आब्रह्मभुवनाँल्लोकानिदमस्तु तिलोदकम् ।**

**यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् ॥**

**इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम् ।**

## (छ) वस्त्रनिष्पीडनम्

**ॐ ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।**

**ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥**

ततः सव्यं कृत्वाऽऽचम्य पूर्वाभिमुखो भूत्वा ब्रह्मादीन्पूजयेत् ।

## (ज) ब्रह्मादिदेवानां पूजनम्

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः ।**

**सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥**

ॐ ब्रह्मणे नमः ।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाँसुरे स्वाहा ॥**

ॐ विष्णवे नमः ।

**ॐ नमस्ते रुद्रमन्यवऽउतोतऽइषवे नमः । बाहुभ्यामुत ते नमः ।**

ॐ रुद्राय नमः ।

**ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥**

ॐ सवित्रे नमः ।

**ॐ मित्रस्य चर्षणी धृतो वो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥**

ॐ मित्राय नमः ।

**ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥**

ॐ वरुणाय नमः ।

## (झ) सूर्यार्घ्यदानम्

**ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

अनेन मन्त्रेण सूर्यायार्घ्यं दद्यात् ।

**ॐ अदृश्रमस्य केतवो विरश्मयो जनाँ २ऽअनु । भ्राजन्तोऽअग्नयो यथा ।**

**उपयामगृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ।**

**सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोहं मनुष्येषु भूयासम् ॥**

**ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**

**नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥**

इति मन्त्राभ्यां सूर्यमुपस्थाय प्रदक्षिणीकृत्य दिग्भ्योदिग्देवेभ्यश्च प्रणमेत् ।

## (ञ) दिशां दिग्देवानाञ्च प्रणमनम्

ॐ प्राच्यै दिशे नमः । ॐ इन्द्राय नमः । ॐ आग्नेयै दिशे नमः । ॐ अग्नये नमः ।

ॐ दक्षिणायै दिशे नमः । ॐ यमाय नमः । ॐ नैऋत्यै दिशे नमः । ॐ निर्ऋतये नमः ।

ॐ प्रतीच्यै दिशे नमः । ॐ वरुणाय नमः । ॐ वायव्यै दिशे नमः । ॐ वायवे नमः ।

ॐ उदिच्यै दिशे नमः । ॐ कुवेराय नमः । ॐ ऐशान्यै दिशे नमः । ॐ ईशानाय नमः ।

ॐ ऊर्ध्वायै दिशे नमः । ॐ ब्रह्मणे नमः । ॐ अधोदिशे नमः । ॐ अनन्ताय नमः ।

तत उपविश्य नमेत्

ॐ ब्रह्मणे नमः । ॐ अग्नये नमः । ॐ पृथिव्यै नमः । ॐ ओषधीभ्यो नमः ।

ॐ वाचे नमः । ॐ वाचस्पतये नमः । ॐ विष्णवे नमः । ॐ महद्भ्यो नमः ।

ॐ अद्भ्यो नमः । ॐ अपां पतये नमः । ॐ वरुणाय नमः ।

## (ट) मुखाभिमर्शनम्

**ॐ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन ।**

**त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् ॥**

इति मन्त्रेण मुखमभिमृश्य ।

## (ठ) चक्षुः स्पर्शः

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।**

**पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतं प्रब्रवाम**

**शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥**

इति मन्त्रेणानामिकाङ्गुष्ठाभ्यां जलं स्पृष्ट्वा चक्षुः स्पर्शः कार्यः ।

## (ड) पितृविसर्जनम्

**ॐ देवागातुविदो गातुं वित्त्वा गातुमित ।**

**मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वाते धाः ॥**

इति मन्त्रेण पितॄन् विसर्जयेत् ।

*॥ इति तर्पणविधिः ॥*

**अथ एकोद्दिष्टश्राद्धप्रयोगः**

## (ढ) दीपपूजा

आचम्य गोमयोपलिप्ते प्राङ्गणे दीपं प्रज्वल्य ।

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥**

ॐ रक्षोघ्नदीपाय नमः । इति दीपं पूजयेत् ।

## (ण) ब्राह्मणनिमन्त्रणम्

अपसव्यं कृत्वा ताम्बूलादिकं विप्रहस्ते दत्वा दक्षिणाभिमुखो भूत्वा उदङ्मुखस्य पितृब्राह्मणस्य वामजानु स्ववामहस्तेन स्पृष्ट्वा स्ववामजानु च पातयित्वा निमन्त्रयेत् ।

ॐ अद्येत्यादि (अमुक) गोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्यकर्तव्य- सांवत्सरीकैकोद्दिष्टश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः ।

ॐ निमन्त्रितोस्मि । इति प्रतिवचनम् ।

ततो बद्धाञ्जलिः पठेत् ।

**ॐ अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ।**

**भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥**

**सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।**

**भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥**

ॐ भवितव्यम् । इति प्रतिवचनम् ।

## (त) पादार्घः

ततो ब्राह्मणचरणौ प्रक्षालयेदनेन मन्त्रेण ।

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥**

**यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे ।**

**तत्फलं पाण्डवश्रेष्ठ विप्राणां पादशौचने ॥**

ततो मोटकमादाय

ॐ अद्यामुकगोत्रोऽस्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे एष पादार्घस्ते स्वधा । ततः सव्येनाचम्य गृहं प्रवेशयेत् । अपसव्येन ॐ आगता यूयम् ॐ सुस्वागता वयम् । ॐ इदमासनमास्यताम् ॐ आसे । इति प्रतिवचनम् । ब्राह्मणमुदङ्मुखमुपवेशयेत् ।

## (थ) कर्मपात्रनिर्माणम्

ॐ कर्मपात्रमहं करिष्ये ॐ कुरुष्व । इत्यनुज्ञातः सन् यद्देवा देवहेडनमिति कण्डिकात्रयेण पवित्रं गन्धादिकं च स्वस्वमन्त्रेण क्षिप्त्वा कर्मपात्रं कुर्यात् । तत्र मन्त्राः

**ॐ यद्देवा देव हेडनन्देवासश्चकृमावयम् ।**

**अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥**

**ॐ यदि दिवा यदि नक्तमेनाꣳसि चकृमावयम् ।**

**वायुर्मा तस्मा देनसो विश्वान् मुञ्चत्वꣳहसः ॥**

**ॐ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमा वयम् ।**

**सूर्यो मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥**

इति कण्डिकात्रयेण देवानावाह्य

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥**

इति मन्त्रेण पवित्रं क्षिपेत् ।

**ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ।**

**शं योरभिस्रवन्तु नः** ॥ इति जलम्

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।**

**प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रिणाहि नः स्वाहा** ॥ इति तिलान् ।

**ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**

**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण** ॥ इति पुष्पम् ।

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥** इति चन्दनम् ।

**ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत ।**

**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥** इत्यक्षतान् ।

## (द) प्रतिज्ञासङ्कल्पः

ततः सव्येन कुशत्रयसहितं कर्मपात्रोदकमादाय

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

इत्युक्त्वा श्राद्धदेशं द्रव्याणि आत्मानं च सिञ्चेत् । तत्कुशादिकमादाय

ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्यकर्तव्य सांवत्सरीकैकोद्दिष्टश्राद्धमेभिर्द्रव्यैरहं करिष्ये ।

इति सङ्कल्प्य

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

इति त्रिः पठित्वा

**ॐ सप्तव्याधा दशार्णेषु मृगाः कालाञ्जरे गिरौ ।**

**चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे ॥**

**तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।**

**प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥**

**ये विप्रमुख्याः कुरुजाङ्गलेषु जातास्तथा दासकुले मृगाश्च ।**

**कालाञ्जरे सप्त च चक्रवाका ये मानसे ते वयमत्र सिद्धाः ॥**

**पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।**

**यत्र यत्र स्मरेद् विद्वान् पितॄणां दत्तमक्षयम् ॥**

**श्राद्धभूमौ गयां ध्यात्वा तथा देवं गदाधरम् ।**

**उभाभ्यां च नमस्कृत्य ततः श्राद्धं समारभेत् ॥**

**गयागजो गयादित्यो गायत्री च गदाधरः ॥**

**गया गयासुरश्चैव षड्गया मुक्तिदायकाः ॥**

**ईशानविष्णुकमलासनकार्तिकेय–**

**वह्नित्रयार्करजनीशगणेश्वराणाम् ।**

**क्रौञ्चामरेन्द्रकमलोद्भवकश्यपानां**

**पादान्नमामि सततं पितृमुक्तिहेतोः ।**

ॐ गयायै नमः । ॐ गदाधरायै नमः । इति च पठेत् ।

## (ध) दिग्बन्धनं नीविबन्धनं च

तत अपसव्येन दिग्बन्धनं. कुर्यात् । तिलसहितमोटकमादाय तिलान् पूर्वादिक्रमेण वक्ष्यमाणमन्त्रैर्विकिरेत् ।

**ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।**

**ॐ अपहताऽअसुरा रक्षाᳬसि वेदिषदः** । इति प्राच्याम् ।

तथा

**ॐ बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ।**

**ॐ अपहताऽअसुरा रक्षाᳬसि वेदिषदः** । इति दक्षिणस्याम् ।

**ॐ प्रतीचीमाज्यपास्तद्वत् ।**

**ॐ अपहताऽअसुरा रक्षाᳬसि वेदिषदः** ॥ इति प्रतीच्याम् ।

**ॐ उदीचीमपि सोमपाः ।**

**ॐ अपहताऽअसुरा रक्षाᳬसि वेदिषदः** ॥ इति उत्तरस्याम् ।

**ॐ ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवाडनलोऽप्यधः** ॥ इत्यूर्ध्वायाम् ।

**ॐ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।**

**सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे** । इति भूमौ ।

ततो मोटकं नीव्यां (दक्षिणकट्यां) धारयेदनेन मन्त्रेण

**ॐ निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया ।**

**रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे** ॥

इति दिग्बन्धननीविबन्धने ।

ततस्तिलसहितकुशखण्डत्रयं गृहीत्वा

**ॐ प्रयान्तु दूरतः सर्वे दैतेया दानवास्तथा ।**

**सर्वविघ्नोपशान्त्यर्थं क्षिपामि च कुशांस्तिलान्** ॥

इति मन्त्रेण दक्षिणस्यां क्षिपेत् ।

## (न) अथासनम्

अपसव्येन मोटकमादाय

ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे

इदं मोटकरूपमासनं ते स्वधा ।

इति ब्राह्मणाय मोटकरूपमासनं दद्यात् ।

## (प) हस्तार्घः

ॐ हस्तार्घपात्रमहं करिष्ये, इति पृच्छेत् । ॐ कुरुष्व, इत्यनुज्ञातः सन् पुटकमेकमग्रे कृत्वा तत्र ॐ पवित्रे स्थः इति मन्त्रेण उत्तराग्रं पवित्रं क्षिपेत् । ॐ शन्नो देवीः० इति मन्त्रेण जलं क्षिपेत् ।

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।**

**प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रिणाहि नः स्वाहा ॥**

इति मन्त्रेण तिलान् क्षिपेत् ।

ॐ श्रीश्च ते... । इति पुष्पम् । ॐ गन्धद्वाराम् .. । इति गन्धं प्रक्षिपेत् ।

ततः ॐ हस्तार्घपात्रं संपन्नम् इति ब्राह्मणं पृच्छेत् । ॐ सुसंपन्नम् इति तेनोक्ते

ॐ हस्तार्घपात्रम् उत्थापयामि इति पृच्छेत् । ॐ उत्थापयस्व, इत्यनुज्ञातः हस्तार्घपात्रं वामहस्ते कृत्वा

ॐ नमो नारायणाय इति मन्त्रेण पुष्पसहितं पवित्रं दक्षिणाग्रं विप्रकरे धृत्वा वामहस्तस्थं हस्तार्घपात्रमुत्तानस्वदक्षिणकरेणापिधाय

**ॐ या दिव्याऽआपः पयसा संबभूवुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।**

**हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः शꣳस्योना सुहवा भवन्तु ॥**

इति मन्त्रेणार्घपात्रस्थजलमभिमन्त्र्य जलतिलमोटकमादाय

ॐ अद्येहामुकगोत्रास्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे एष हस्तार्घस्ते स्वधा । इति ब्राह्मणकरे अर्घ्यं दद्यात् ।

ॐ अर्घे पुनः प्रत्यर्घ्यमस्तु । इति पुष्पपवित्रसहितं तदर्घपात्रं भूमौ धृत्वा सव्यं कृत्वा तत्रस्थजलेन ॐ तच्चक्षुरिति मन्त्रेण चक्षुः स्पर्शः कार्यः । ततोऽपसव्येनार्घपात्रं गृहीत्वा ब्राह्मणस्य वामपार्श्वे ॐ पित्रे स्थानमसि । इति न्युब्जं कुर्यात् । तदुपरि कुशत्रयं दद्यात् ।

## (फ) ब्राह्मणपूजा

ततः ॐ अर्चयिष्ये इति ब्राह्मणं पृच्छेत् । ॐ अर्चय इत्युक्ते जलचन्दनपुष्पाक्षतताम्बूलयज्ञोपवीतद्रव्यवस्त्रादिभिः समभ्यर्च्य धूपदीपौ नैवेद्यं च कृत्वा मोटकमादाय

ॐ अद्येहामुकगोत्रास्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे एतान्यर्चनानि अत्र गन्धपुष्पाक्षतताम्बूलयज्ञोपवीतधूपदीपनैवेद्यद्रव्यवासांसि ते स्वधा ।

**ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु ।**

इति विप्रकरे जलं दद्यात् । ॐ अस्तु । इति प्रतिवचनम् ।

## (ब) अथान्नसङ्कल्पः । तत्रादौ (भूस्वामी)

ततः सव्येनाचम्य अपसव्येन

**ॐ यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ।**

**एवं मण्डलभस्मैतत्सर्वभूतानि रक्षतु ॥**

इति मन्त्रेण वामावर्तेन चतुष्कोणमण्डलं विधाय तिलघृतमधुजलयुतमन्नं मोटकादिसहितमादाय-

**ॐ इदमन्नं सजलमेतद्भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत् ।

**अथान्नसङ्कल्पः**

सोपस्करं तिलजलयुतमन्नमुपनीय मधुनाभिधार्य अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्यामन्नपात्रमालभ्य

**ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ।**

इत्यालभ्य, **ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधेपदम् । समूढमस्यपाᳫँसुरे ॥**

इत्यन्तं पठित्वा

**ॐ विष्णो कव्यमिदं रक्ष मदीयम् ।**

इति च पठित्वा विप्रदक्षिणाङ्गुष्ठं गृहीत्वा ॐ इदमन्नमित्यन्ने । ॐ इमा आप इति जले । ॐ इदमाज्यमिति घृते । ॐ इदं हविरिति पुनरन्ने । एतान्युपकरणानि ।

इति क्रमेणान्नजलघृतादिषु दक्षिणाङ्गुष्ठं निवेश्य

**ॐ अपहताऽअसुरा रक्षाᳫँसि वेदिषदः ।**

इति पठित्वा वामावर्तेन श्राद्धदेशे तिलान् विकीर्य मोटकादीन्यादाय वामहस्ताङ्गुष्ठाङ्गुलिभिः क्रमेणान्नमपश्च स्पृष्ट्वा

ॐ अद्येहामुकगोत्रायास्मत्पित्रेऽमुकशर्मणे वसुस्वरूपायाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणम् अक्षय्यतृप्तिहेतोस्ते स्वधा ।

इति भूमावेव मोटकादिकमुत्सृजेत् ।

**ॐ अन्नसङ्कल्पसिद्धिरस्तु । ॐ भवान् प्राशयतु ।**

इति विप्रकरे जलं दद्यात् ।

ततः श्राद्धकर्ता कुशोपरि विशन् सव्येन सव्याहृतिकां गायत्रीं जपित्वा मधुवातेति पठेत् ।

**ॐ मधु वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

**ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवᳫँरजः । मधु द्यौरस्तु नः पिता ॥**

**ॐ मधुमान्नो वनस्पतिर्मधुमाँ२ऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥**

ॐ मधु मधु मधु ।

**ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत् सर्वमच्छिद्रमस्तु श्रीभास्करस्य प्रसादतः ॥**

**ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥**

इति पठित्वा । '**ॐ यथासुखं जुषस्व**' इति वचनानन्तरं पितृसूक्तं च पठेत् ।

**ॐ अग्नये कव्यवाहनायेति षट् ६ । ॐ तदेव षोडश १६ ।**

**ॐ कृणुष्व पाज इति पञ्च ५ । ॐ सुरावन्तमित्यादि अपां फेनेनेत्यन्तम् ३९।**

**ॐ सहस्रशीर्षेति षोडश १६ । ॐ नमस्ते इति षट्षष्टिः ६६ । (१४८)**

ब्राह्मणस्य यत्र यत्रेच्छोपलभ्यते तत्तत्प्रयच्छन् मन्दं मन्दं भोजयेत् । ततो ब्राह्मणं तृप्तं ज्ञात्वा अपसव्येन ।

## (भ) विकिरदानम्

ततोऽन्नपात्रसन्निधौ गत्वाऽऽस्तृतदक्षिणाग्रकुशत्रयायां भूमौ विकिरासनं दद्यात् ।

अपसव्येन मोटकमादाय

**असंस्कृतप्रमीतानां त्यागीनां कुलयोषिताम् ।**

**उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥**

इति मोटकरूपमासनमास्तृतकुशोपरि उत्सृजेत् ।

ततः समधुतिलघृतयुतमन्नं जलेनाप्लाव्य मोटकादिकं चादाय

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।**

**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥**

इति मन्त्रेणास्तृतकुशोपरि तदन्नं विकिरेत् । अत्र ओङ्कारहितः कार्यः ।

ततः कुशान् परित्यज्य हस्तौ पादौ प्रक्षाल्य सव्येन द्विराचम्य हरिं स्मरेत् ।

ततः सप्रणवव्याहृतिपूर्वां गायत्रीं जपित्वा, **ॐ मधुवाताऽऋतायते** ।

इतित्यृचम् । ॐ मधु ३ इति च जपेत् ।

ॐ जलगण्डूषमिदं ते । इति ब्राह्मणाय प्रत्यपोशानं दद्यात् । अत्र वाग्विसर्गः ।

ततोऽपसव्येनाञ्जलिं बध्वा ब्राह्मणं पृच्छेत् ।

**ॐ स्वदितम् । ॐ सुस्वदितमिति प्रतिवचनम् ।**

**ॐ शेषमन्नं किं क्रियताम् । ॐ इष्टैः सह भुज्यताम् । इति प्रतिवचनम् ।**

**ॐ पिण्डदानमहं करिष्ये । ॐ कुरुष्व । इति प्रतिवचनम् ।**

## (म) पिण्डवेदिनिर्माणं तथा संस्कारश्च

ततः पिण्डदानार्थं हस्तमितां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय वामेन पाणिना दर्भपिञ्जुलीं गृहीत्वा दक्षिणहस्ते कृत्वा सव्योपगृहीतदक्षिणपाणिना

**ॐ अपहताऽअसुरा रक्षाᳬसि वेदिषदः ।**

इति मन्त्रेण दक्षिणाग्रां रेखां कृत्वा दर्भपिञ्जुलीमुत्तरस्यां क्षिपेत् । तदुपरि ॐ ये रूपाणि... इति मन्त्रेणाङ्गारं भ्रामयित्वा दक्षिणस्यां क्षिपेत् ।

**ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराःसन्तः स्वधया चरन्ति ।**

**परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥**

ततो जलेन

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ।**

इति मन्त्रेण पिण्डिकासेचनम् । तदनु छिन्नमूलकुशान् दक्षिणाग्रान् पिण्डिकायां दद्यात् ।

ततः सव्येन

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

इति त्रिः पठेत् ।

## (य) पिण्डदानम्

अपसव्यं विधाय एकं पुटकं वामहस्ते कृत्वा मोटकादिकमादाय

ॐ अद्येहामुकगोत्रास्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे पिण्डस्थानेऽत्रावनेजनं निक्ष्व ते स्वधा । इति अवनेजनं दद्यात् ।

ततो मोटकादीनि पिण्डं चादाय वामहस्ते पुटकादिस्थजलमादाय

ॐ अद्येहामुकगोत्रास्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे एष पिण्डोऽमृतस्वरूपोऽक्षय्यतृप्तिहेतोस्ते स्वधा ।

इति अवनेजनोपरि पिण्डं दद्यात् । अत्र लेपभागनिषेधः । करं प्रोक्ष्य कुशान् परित्यज्य सव्येन द्विराचम्य हरिं स्मरेत् ।

ततः सव्येनैव गन्धपुष्पादीन्यादाय पितरमुद्दिश्य

**ॐ अत्र पितरो मादयध्वं यथाभागमा वृषायध्वम् ।**

इति मन्त्रं पठित्वा वामावर्तेनोत्तराभिमुखो भूत्वा श्वासं नियम्य भास्वरमूर्तिं पितरं ध्यायन् अपसव्यं कृत्वा दक्षिणावर्तेन दक्षिणाभिमुखो भूत्वा

**ॐ अमीमदन्त पितरो यथाभागमा वृषायिषत ।**

इति मन्त्रेण गन्धपुष्पादीनि पिण्डोपरि क्षिपेत् । ततोऽवनेजनपात्रं वामहस्ते कृत्वा मोटकादिकमादाय

ॐ अद्येहामुकगोत्रास्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे इदं पिण्डप्रत्यवनेजनं ते स्वधा । इति पिण्डे प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत् । ततोऽपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय

**ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासः ॥**

इति मन्त्रं पठित्वा पिण्डोपरि सूत्रं दद्यात् ।

## (र) पिण्डपूजनम्

ततः पिण्डं गन्धादिभिः संपूज्य धूपदीपौ च कृत्वा मोटकमादाय

ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन् वसुस्वरूपाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे एतानि पिण्डार्चनानि अत्र सूत्रगन्धपुष्पाक्षतधूपदीपैक्षवादि नैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि ते स्वधा ।

इति गन्धादिकमुत्सृजेत् । ततो विप्रकरे

**ॐ शिवा आपः सन्तु । इति जलम् । ॐ सौमनस्यमस्तु । इति पुष्पम् ।**

**ॐ अक्षतं चारिष्टमस्तु । इति तण्डुलान् दद्यात् ।**

ततः सव्येन पूर्वाभिमुखो भूत्वा वक्ष्यमाणमन्त्रान् पठेत् ।

**ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।**
**ब्राह्मणस्य करे न्यस्ता शिवा आपो भवन्तु मे ॥**
**लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।**
**लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे ॥**
**अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा ।**
**यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥**

## (ल) कर्मपात्रोदकेनाभिषेकः

ततः कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत्

**ॐ अस्मत्कुले दीर्घमायुरस्तु । ॐ शान्तिरस्तु । ॐ पुष्टिरस्तु । ॐ वृद्धिरस्तु ।**

**ॐ यच्छ्रेयस्तदस्तु । ॐ यत्पापं तत्प्रतिहतमस्तु ॥ इति भूमौ ।**

**ॐ द्विपदे चतुष्पदेभ्यः शान्तिर्भवतु ।**

*॥ इति ॥*

ततोऽपसव्येन पिण्डशेषान्नं पिण्डसमीपे विकिरेत् । वामहस्ते पुटकादिस्थजलं कृत्वा मोटकादिकमादाय ॐ अद्येहामुकगोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्य कर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम् । इति पिण्डेऽक्षय्योदकं दद्यात् ।

ततः सव्येन कृताञ्जलिर्दक्षिणां दिशमवलोकयन्

**ॐ अघोरः पितास्तु ।** इति पूर्वाग्रां जलधारां दद्यात् ।

### (व) अथाशिषः प्रार्थना

ततः प्राङ्मुखो भूत्वाऽञ्जलिं बध्वाऽऽशिषः प्रार्थयेत् ।

**ॐ गोत्रन्नो वर्धताम् । ॐ वर्धताम् ।**

**ॐ दातारानोऽभिवर्धन्ताम् । ॐ वर्धन्ताम् ।**

**ॐ वेदा वर्धन्ताम् । ॐ वर्न्धन्ताम् ।**

**ॐ सन्ततिर्वर्धताम् । ॐ वर्धताम् ।**

**ॐ श्रद्धा च नो मा व्यगमत् । ॐ मा गात् ।**

**ॐ बहुदेयं च नोऽस्तु । ॐ अस्तु ।**

**ॐ अन्नं च नो बहु भवेत् । ॐ भवतु ।**

**ॐ अतिथीं च लभेमहि । ॐ लभध्वम् ।**

**ॐ याचितारश्च नः सन्तु । ॐ सन्तु ।**

**ॐ मा याचिष्म कञ्चन । ॐ मा याचेथाः ।**

**ॐ एताः सत्या आशिषः सन्तु । ॐ सन्तु ।**

*॥ इति प्रतिवचनम् ॥*

### (श) तिलकदानम्

ततो ब्राह्मणहस्तेन तिलकं कुर्यात् ।

**ॐ यं कामं कामयते सोऽस्मै कामः समृध्यताम्** । इति । ततोऽपसव्येन सपवित्रान् कुशान् न्युव्जपात्रात्समादाय पिण्डोपरि निक्षिप्य **ॐ स्वधां वाचयिष्ये** । **ॐ वाच्यताम्** ।

इति प्रतिवचनान्तरं रिक्ताञ्जलिना

ॐ अद्येहामुकगोत्रायास्मत्पित्रेऽमुकशर्मणे वसुस्वरूपायाद्यकर्तव्यसांवत्सरीकैकोद्दिष्टश्राद्धे स्वधोच्यताम् । ॐ अस्तु स्वधा ।

### (ष) पयोधारा

ततः पयसादि सहितं पुटकं वामहस्ते कृत्वा सव्येन

**ॐ ऊर्जं बहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।**

**स्वधास्थ तर्पयत मे पितॄन्** ॥

इति मन्त्रं पठित्वा सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात् ।

ततः **ॐ पिण्डः सम्पन्नः** । **ॐ सुसम्पन्नः** । **ॐ पिण्डमुत्थापयामि** । **ॐ उत्थापयस्व** ।

इत्यनुज्ञातः सन् सव्येन नम्रीभूय सव्येन पिण्डमाघ्राय अपसव्येन उत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ।

### (स) शङ्खचक्रपूजा

सव्येन पिण्डिकायां शङ्खं चक्रं च लिखित्वा **ॐ शङ्खाय नमः** ।

**ॐ चक्राय नमः** । इति यवैः शङ्खचक्रपूजां विधाय अपसव्यं कृत्वा

**ॐ गयायां पितृरूपेण स्वयमेव जनार्दनः ।**

**तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्** ॥

इति मन्त्रेण पिण्डं पिण्डकोपरि निदध्यात् ।

### (ह) वसन्तादिपूजा

सव्येन

**ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः** ।

**वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः** ॥

**हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च** ।

**माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः** ॥

ततः (कर्पूरदीपं दत्वा) अपसव्येनार्घपात्रमुत्तानीकृत्य

### (क्ष) दक्षिणासङ्कल्पः

सव्येन दक्षिणां दद्यात् । कुशतिलजलयुतदक्षिणाद्रव्यमादाय

ॐ अद्येहेत्यादि (अमुक) गोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्यकृतैतत्सांवत्सरीकैकोद्दिष्टश्राद्धकर्मणः साङ्गतासिद्ध्यर्थमिमां दक्षिणां रजतं चन्द्रदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति विप्रकरे दद्यात् ।

पुनः कुशादिसहितं भूयसीदक्षिणाद्रव्यमादाय-

ॐ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्यकृतै तत्सांवत्सरीकैकोद्दिष्टश्राद्धकर्मणो न्यूनातिरिक्तपरिपूरणार्थमिमां भूयसीदक्षिणां रजतखण्डं चन्द्रदैवतं (ताम्रखण्डं सूर्यदैवतं वा) यद्देयमन्नपानादिकं द्रव्यं च यथानामदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य यथाकाले दातुमहं जले उत्सृजे । इति जले उत्सृजेत् ।

### (त्र) ब्राह्मणविसर्जनम्

ततोऽपसव्येन **ॐ अभिरम्यताम्** । **ॐ अभिरताः स्मः** । इति प्रतिवचनान्ते ब्राह्मणस्य दक्षिणाङ्गुष्ठं गृहीत्वोत्थाप्य

**ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे** ।

**आ मा गन्तां पितरामातरा चामा सोमोऽमृतत्वेन गम्यात्** ॥

इति त्रिर्वारिधारयाऽऽवेष्ट्य विसर्जयेत् । ततः सव्येन,

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**

**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥**

इति त्रिः पठेत् ।

## (ज्ञ) अथ दीपाच्छादनम्

अपसव्येन दीपाच्छादनं विधाय हस्तौ पादौ प्रक्षाल्य सव्येनाऽऽचामेत् ।

## (अ) प्रार्थना

ततोऽञ्जलिं बध्वा प्रार्थयेत् ।

**ॐ यत्कृतं तत्सुकृतमस्तु, यन्न कृतं तद्विष्णोः प्रसादाद् ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्तु । ॐ अस्तु परिपूर्णम् ।**

**ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥**

**ॐ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षसुखानि च ।**

**प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः ॥**

## (आ) कर्मसमर्पणम्

ततः कर्मपात्रावशिष्टकुशादिकमादाय

**ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्धयात्मना वाऽनुसृतः स्वभावात् ।**

**करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत् ॥**

इति कुशादिकं भूमौ त्यजेत् ।

ततो यस्य स्मृत्येति अच्युतं नमस्कुर्यात् ।

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**

ॐ अच्युताय नमः ३ ।

ततश्चतुर्भिश्चेति विष्णुं स्मरेत्

**ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**

**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥**

*॥ इति ॥*

## (इ) आशिर्मन्त्रपाठः

**हरिः ॐ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसन्तनूनाम् ।**
**पुत्रासो यत्र पितरो भवन्ति मा नो मध्यारीरिषतायुर्गन्तोः ॥**
**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।**
**विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥**
**स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।**
**चित्रसेनाऽइषुबलाऽअमृध्राः सतोवीराऽउरवो व्रातसाहाः ॥**
**ब्राह्मणासः पितरः सोम्यासः शिवेनो द्यावापृथिवीऽअनेहसा ।**
**पूषा नः पातु दुरितादृतावृधो रक्षा मा कीर्नोऽअघशꣳसऽईशत ॥**
**पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः**
**स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ।**
**अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम् ॥**
**पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु**
**प्रपितामहाः पवित्रेण शतायुषा ।**
**पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण**
**शतायुषा विश्वमायुर्व्यश्नवै ॥**

*॥ इति ॥*

## (ई) प्रसादग्रहणम्

**ॐ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षसुखानि च ।**
**प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः ॥**

*॥ इति एकोद्दिष्टश्राद्धविधिः ॥*

### शब्दार्थाः

| | | |
|---|---|---|
| दिग्बन्धनम् | = | सबै दिशाहरूमा तिल छरेर श्राद्धमा विघ्नबाधा गर्नेहरूलाई हटाउनु (दिशाहरू बाँध्नु) |
| नीविबन्धनम् | = | मोटक र फूल कटिमा बाँध्नु |
| देवतीर्थः | = | औँलाको टुप्पो |
| कायतीर्थः | = | कान्छीऔँलाको फेद |
| पितृतीर्थः | = | बुढीऔँला र चोरीऔँलाको बिच |

| | | |
|---|---|---|
| तातत्रितयम् | = | बुबा, हजुरबुबा र जिजुहजुरबुबा गरी तीन पुस्ता |
| अम्बात्रितयम् | = | आमा, हजुरआमा र जिजुहजुरआमा गरी तीन पुस्ता |
| तातजननीस्वभ्रातरः | = | काका, मामा र दाजुभाइ |
| ताताम्बात्मभगिन्यपत्यधवयुक् | = | सन्तान र पतिले सहित भएका फुपू, सानिमा, ठुलीआमा र दिदीबहिनी |
| पादार्घः | = | ब्राह्मणको पाउ धुने अर्घपात्र |
| हस्तार्घः | = | ब्राह्मणको हात धुने अर्घपात्र |
| विकिरदानम् | = | संस्कार नभई मरेका जुठो पूरा खाने डढेर अगति परेर मरेका-हरूलाई दिने भाग |
| भूस्वामी | = | भूमिपतिलाई दिइने अन्नको भाग (सिधा)। |
| वसन्तादि पूजा | = | पिण्ड उठाइसकेपछि पिण्डमा गरिने ऋतुस्वरूप पितृहरूको पूजा |

## अभ्यासार्थाः प्रश्नाः

**१. 'विश्वेदेवासऽआगत' इति प्रतीकात्मकं मन्त्रं पूरयत ।**

**२. सप्तमनुष्याः के ? तेषां नामानि क्रमेण लिखत ।**

**३. सूर्यार्घ्यदानमन्त्रः कः ?**

**४. वस्त्रनिष्पीडनमन्त्रं लिखत ।**

**५. प्रायश्चित्तगोदानप्रयोगं प्रदर्शयत ।**

**६. तर्पणार्हाः पितरः के ? तर्पणक्रमश्च कः ? सुस्पष्टं लिखत ।**

**७. हस्तार्घनिर्माणविधिं वर्णयत ।**

**८. ब्राह्मणनिमन्त्रणप्रकारः प्रदर्शनीयम् ।**

**९. पिण्डदानसङ्कल्पवाक्यं लिखत ।**

**१०. ब्राह्मणपूजायाः सङ्कल्पवाक्यं विलेखनीयम् ।**

**११. विकिरासनविकिरदानमन्त्रौ पूरणीयौ ।**

**१२. पिण्डिकासेचनमन्त्रः कः ?**

**१३. पिण्डे केन मन्त्रेण पयोधारा प्रदीयते ।**

**१४. अक्षय्योदकदानसङ्कल्पवाक्यं प्रदर्शनीयम् ।**

**१५. वसन्तपूजनमन्त्रो लेख्यः ।**

**१६. ब्राह्मणविसर्जनविधिः प्रदर्शनीयः ।**

**१७. पद्धत्यनुसारेण हस्तार्घपात्रविधिः प्रदर्शनीयः ।**

**१८. पिण्डिकायामङ्गारभ्रामणमन्त्रं विलिखत ।**

**१९. पिण्डवेदिनिर्माणप्रकारं यथाग्रन्थं विवेचयत ।**

**२०. पिण्डे सूत्रदानमन्त्रः कः ?**

**२१. एकोद्दिष्टश्राद्धे कर्मपात्रोदकेन सिञ्चनमन्त्राः के ? यथाक्रमेण लिखत ।**

**श्राद्धे आवश्यकान्युपकरणानि**

यवाः कुशाः तिलाः गन्धम् (श्रीखण्ड चन्दनम्) अक्षताः श्वेतं वा पीतं पुष्पं धूपः दीपः नैवेद्यं फलं पक्वान्नं च वस्त्रं (श्वेतम्) यज्ञोपवीतं ताम्बूलं पूगीफलम् आमान्नं सूत्रं कर्पूरं (सिद्धान्नम्) पयः दधि घृतं मधु शर्करा बालुका पिण्डार्थं पायसं यवपिष्टं वा श्राद्धे यथासम्भवं रजतपात्राणि ताम्रपात्राणि वा प्रयोक्तव्यानि । लौहपात्राणि तु गर्हितानि सन्ति ।

दशमः पाठः

# गृहारम्भः, गृहप्रवेशश्च

## (क) खातारम्भे राहोर्मुखज्ञानम्

**देवालये गेहविधौ जलाशये राहोर्मुखं शम्भुदिशो विलोमतः।**

**मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात्पृष्ठविदिक्छुभो भवेत्।**

– महूर्तचिन्तामणि, वास्तुप्रकरणम् ॥१९॥

देवालयप्रारम्भे राहोर्मुखं

मीनार्कतस्त्रिराश्यवस्थिते सूर्ये ऐशानीतो विलोमतो विदिक्षु वायव्यादिषु राहोर्मुखं स्यात्।

यथा

मीनमेषवृषराश्यवस्थिते सूर्ये राहोर्मुखमैशान्याम्।

मिथुनकर्कसिंहराश्यवस्थिते सूर्ये वायव्याम् राहुमुखम्।

कन्यातुलावृश्चिकस्थे सूर्ये नैर्ऋत्यां राहुमुखम्।

धनुर्मकरकुम्भराश्यवस्थिते सूर्ये आग्नेयां राहोर्मुखमित्यर्थः।

एवं गृहारम्भेऽपि

सिंहार्कतस्त्रिराश्यवस्थितेऽर्के विलोमत ऐशान्यां राहुमुखम्। वृश्चिकादित्रये वायव्याम्। कुम्भादित्रये नैर्ऋत्याम्। वृषादित्रये आग्नेयां राहुमुखं स्यात्।

जलाशयारम्भेऽपि

मकरार्कतस्त्रिराश्यवस्थितेऽर्के विलोमत ऐशान्यां राहुमुखं स्यात्। मेषादितः त्रिभिर्वायव्याम्। कर्कादितस्त्रिभिर्नैर्ऋत्याम्। तुलादितस्त्रिभिराग्नेयां राहुमुखं स्यात्।

राहुमुखज्ञानफलानि

देवालयादिविषयके खाते भूमिशोधने कर्तव्ये सति राहुमुखाक्रान्तदिशः सकाशात् पृष्ठवर्तिनी दिक् शुभा भवेत्।

**खातारम्भदिङ्निर्णयः**

मिथुनादिराशित्रयस्थे सूर्ये राहुमुखं वायव्याम् तत्पृष्ठविदिगैशानी तस्यां खातारम्भः शुभः।

एवं सर्वत्र ज्ञेयम्।

विषयेऽस्मिन् यदाह विश्वकर्मा

**ईशानतः सर्पति कालसर्पो विहाय सृष्टिं गणयेद्विदिक्षु।**

**शेषस्य वास्तोर्मुखमध्य पुच्छं त्रयं परित्यज्य खनेच्चतुर्थम्।**

तथैव ज्योतिश्चिन्तामणौ

**वृषार्कादित्रिकं वेद्यां सिंहादिगणयेद्गृहे ।**

**देवालये च मीनादि तडागे मकरादिकम्** ॥

वास्तुपुरुषो गृहारम्भे

वसिष्ठस्तु गृहारम्भे वास्तुनरमाह

**त्रिषु त्रिषु च मासेषु नभस्यादिषु च क्रमात्** ।

**यद्दिङ्मुखो वास्तुनरस्तन्मुखं सदनं शुभम्** ॥

**अन्यद्दिङ्मुखगेहं तद्दुःख शोकभयप्रदम्** ॥ ॥ इति ॥

गृहे सूत्रन्यासप्रकारो यथा

**आग्नेयादि दृढं प्रदक्षिणगतं सूत्रं समासादयेत्** ।

**मध्ये वामकपार्श्वसुप्तपुरुषं ध्यात्वा तमुत्तानकम्** ॥

**अष्टाश्व्यंश २८ (श) मगेन्दु १७ सम्मिलितवान्पुच्छाद्विहायाग्रगो ।**

**भागो नाभिरितः खनेल्लवमितं वामेश्मभिः पूरयेत्** ॥

लल्लाचार्यः

**त्यजेद् दश शिरोभागे ह्यग्रे सप्तदशांशकान्** ।

**मध्ये नाभिं विजानीयात् तत्र शङ्कु प्रतिष्ठयेत्** ॥

**अस्थिरस्य शिरो यत्र वास्तोस्तद् गणयेत् करैः ।**

**दैर्घ्यं वा विस्तृतिं चैव कृत्वाष्टाश्विमितांशकान्** ॥ मुहूर्तमार्तण्डः १५, गृहप्रकरणम् ।

## गृहारम्भमा सर्पाकार वास्तुपुरुष जुराउने तरिका

**गृहारम्भमा राहु मुखः**

१. राहुरूपी कालसर्प तीनकोण ढाकेर बस्छ । त्यसकारण यस कालसर्पको शिरपुच्छर पृष्ठ भएका कोणमा खातारम्भ नगरेर कालसर्प नभएको कोणमा खातारम्भ गर्नुपर्दछ ।

२. यो राहु (कालसर्प) उल्टो गरी पुच्छरतिरबाट हिँड्ने हुँदा भाद्र, आश्विन, कार्तिकमा ईशान कोणमा शिर छ भने मार्गशीर्ष, पौष र माघमा वायव्य कोणमा राहुको मुख हुन्छ ।

**प्रमाण–** मुहूर्तचिन्तामणि, वास्तुप्रकरण श्लोक - ॥१९॥

१. वास्तुन्यास माने घडेरीभित्र डोरी टाँगदा किलो गाड्नुपर्ने हुँदा सो किलो गाड्दा सर्पाकार वास्तुपुरुष जुराउनुपर्छ ।

२. यो वास्तुपुरुष देब्रे कोल्टो र उत्तानो लमतन्न परेर सुत्दछ ।

३. यस वास्तुपुरुषको शिरतथा पुच्छर पृष्ठमा दाहिनेतिर प्रथम खात नगर्नू । केवल उत्तानो सुत्दा देब्रे जता पर्दछ उतैतिर प्रथम शङ्कु (किलो) का लागि खातारम्भ गर्नू ।

४. वास्तुपुरुष सुत्दा पूर्व-पश्चिम-उत्तर-दक्षिण भएर सुत्छ । घडेरीको पूर्व-पश्चिम अथवा उत्तर-दक्षिण वास्तुपुरुषको शिरपुच्छरअनुसार २८ भाग लगाउनू र पुच्छरतिर १७ भाग र शिरतिर १० भाग छोडी मध्यमा (माझमा) १ भाग नाभि हुन्छ । त्यसै नाभिनिर देब्रेतिर किलो गाड्नू ।

**प्रमाण** मुहूर्तमार्तण्ड, गृहप्रकरण श्लोक- ॥१५॥ र त्यसको टीकामा उद्धृत लल्ल, ब्रह्म, शम्भुशिल्प शास्त्रको वचन ।

५. वास्तुपुरुषको (सर्पको) चाल दाहिने र कालराहुको चाल देब्रे हुन्छ ।

६. राहुरूपी सर्पको स्थिति विदिशा (आग्नेय, नैर्ऋत्य, वायव्य, ईशान) मा र वास्तुपुरुषको स्थिति दिशा (पूर्व, पश्चिम, उत्तर, दक्षिण) मा हुन्छ ।

## (ख) शिलान्यासः

**अथ शिलान्यासविधिः**

अथ कर्ता शुद्धासने उपविश्य दीपं प्रज्वाल्याऽऽचम्य सङ्कल्पं कुर्यात् ।

ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य अमुकगोत्र... अहम् अद्यकर्तव्यशिलान्यासकर्मणि दीपकलशगणेशपूजनपूर्वकमेतद्गृहावासस्य स्थैर्यसिद्धये आयुरारोग्यपुत्रपौत्रद्विपदचतुष्पदधन धान्यादिसमृद्धये शिवप्राप्तये च नन्दादि पञ्चदेवताः पूजनं स्थापनं च करिष्ये । इति सङ्कल्प्य ब्राह्मणवरणं पुण्याहवाचनं च विधाय दीपं कलशं गणेशं च यथाविधि पूजयेत् ।

ततो रक्षोहणमिति मन्त्रेण रक्षासूत्रमभिमन्त्र्य सम्पूज्य दिक्साधनं विधाय ईशानतः प्रादक्षिण्येन रक्षासूत्रेण संवेष्ट्य सुवर्णेन रेखां कृत्वा पञ्चशिलाः पञ्चइष्टका वा पञ्चताम्रकलशान् पञ्चदीपांश्च संस्थाप्य तत्र गृहमितचतुष्कोणेषु लोहकीलकं निदध्यात् अनेन मन्त्रेण ।

**ॐ विशन्तु भूतले नागा लोकपालाश्च सर्वशः ।**
**अस्मिन् गृहेऽवतिष्ठन्तु आयुर्बलकराः सदा ॥**

तत्रैव दध्यक्षतबलिं च दद्यात् ।

**ॐ अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ।**
**बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥**

तत उत्खातभूमौ सर्षपान् विकिरेत् ।

**ॐ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।**
**स्थानं त्यक्त्वा तु तत्सर्वं यत्रत्यं तत्र गच्छतु ॥**
**ॐ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**
**सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥**
**भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः ।**
**स्थानादस्माद् व्रजन्त्वन्यत् स्वीकरोमि भुवं त्विमाम् ॥**

इति भूतोत्सादनं कृत्वा अर्घ्यं संस्थाप्य तत आपो हिष्ठेति मन्त्रेण पञ्चगव्येन सर्वां भुवं प्रोक्षेत् ।

**ॐ आपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन । महे रणाय चक्षसे ।**

**ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः ॥**

**ॐ तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जन यथा च नः ॥**

तत उत्तरवृद्ध्या उपशिलासहिता नन्दा भद्रा जया रिक्ता पूर्णा संज्ञकाः पञ्चशिलाः पञ्चगव्येन स्नापयित्वा कुशशय्यायां भद्रासने स्थापयित्वा कुङ्कुमचन्दनं लिप्त्वा नन्दादिशिलासु क्रमेण ब्रह्मविष्णुरुद्रेशानसदाशिवानावाह्य (ॐ मनो जूतिरिति) प्रतिष्ठाप्य वस्त्रेणाच्छाद्य (सतिसम्भवे सप्तमृतिका पञ्चकषायः गोमूत्रं गोमयं समस्तपञ्चगव्यं व्यस्तपञ्चगव्यं व्यस्तपञ्चामृतं फलं रत्नं सुवर्णं वृषशृङ्गं तीर्थोदकं गन्धोदकयुतैः कलशोदकैः समन्त्रपाठं) नन्दाद्याः शिलाः स्नापयेत् ।

ततो वस्त्रेण परिमार्ज्य सरलासने निवेश्य केसरादियुतेन सुगन्धिना चन्दनेनानुलिप्य सुवर्णादिशलाकया कुङ्कुमादिना नन्दाशिलायां पद्मं भद्राशिलायां सिंहासनं जयाशिलायां तोरणं छत्रं च रिक्ताशिलायां कूर्मं पूर्णाशिलायां चतुर्भुजं विष्णुं च टङ्कोत्किरणमनुसृत्य लिखित्वा वस्त्रेणाच्छाद्याभिषिच्य नन्दाशिलायां (ॐ भूर्भुवःस्वः ब्रह्मणे नमः । पूजार्थं त्वामावाहयामि स्थापयामि) इत्यावाहय (ॐ ब्रह्म जज्ञानम्.. । इति मन्त्रेण पाद्यादिभिरुपचारैः पूजयेत् ।) एवं क्रमेण भद्राशिलायां विष्णुमावाह्य ( ॐ इदं विष्णुः ..) इति विष्णुं । जयाशिलायां रुद्रमावाह्य (ॐ नमस्ते रुद्र ..) इति रुद्रम् । रिक्ताशिलायाम् ईश्वरमावाह्य– (ॐ तमीशानम् ..) इति ईश्वरम् । पूर्णशिलायां सदाशिवमावाह्य (ॐ नमः शम्भवाय) इति सदाशिवं पूजयेत् ।

ततः पूर्वादिक्रमेण इन्द्रादिदशदिक्पालानावाह्य (ॐ त्रातारमिन्द्रम्.. इत्यादि दिक्पालमन्त्रैः सम्पूज्य बलिं च दद्यात् ।)

बलिदानमन्त्रस्तु

**ॐ इन्द्राय साङ्गाय सायुधाय सपरिवाराय सशक्तिकाय नमः** इमं सदीपबलिं समर्पयामि ।

भो भो इन्द्र दिशं रक्ष रक्ष बलिं भक्ष भक्ष यजमानस्यायुष्कर्ता पुष्टिकर्ता तुष्टिकर्ता क्षेमकर्ता वरदो भव । एवं क्रमेण अग्न्यादिदिक्पालेभ्यश्च बलिं दद्यात् ।

तत उत्तरे क्षेत्रपालमावाह्य

**ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि । मा त्वा हिꣳसीन्मा माहिꣳसीः ।**

इति मन्त्रेण सम्पूज्य बलिं दद्यात् ।

ततो नैर्ऋत्ये भूतादीन् सम्पूज्य बलिं दद्यात् ।

ततो वास्तुभूमिं सम्पूज्य प्रार्थयेत्

**ॐ विश्वं त्वं कमले भूते पृथिवि लोकधारिणि ।**

**यज्ञार्थे क्षोभिता देवि प्रसीद परमेश्वरि ॥**

ततो वास्तुपुरुषम्

**ॐ वास्तोष्पते प्रतिजानीहचस्मान्त्स्वावेशोऽअनमीवो भवा नः ।**

**यत्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे ॥**

इति मन्त्रेण सम्पूज्य प्रार्थयेत्

**ॐ वास्तोष्पते नमस्तेऽस्तु भूमिशय्यारत प्रभो ।**

**मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदा ॥**

ततः ॐ नन्दे इहागच्छ इह तिष्ठ । ॐ नन्दायै नमः । इति नन्दाशिलां सम्पूज्य एवमेव क्रमेण भद्राशिलां जयाशिलां रिक्ताशिलां पूर्णाशिलामपि नाममन्त्रेण पूजयेत् ।

ततो नन्दादिशिलानामग्रे कलशस्थापनविधिना उत्तरोतरक्रमेण पञ्चकलशान् स्थापयित्वा तेषु सर्वेषु आज्यं मधु पारदं शैवालम् इति पञ्चरत्नानि प्रक्षिप्य

ॐ पद्माय नमः ॐ महापद्माय नमः । ॐ शङ्खाय नमः । ॐ विजयाय नमः । (ॐ मकराय नमः । इति वा) ॐ सर्वतोभद्राय नमः । इति नामन्त्रेणावाह्य प्रतिष्ठापूर्वकं सम्पूज्य धूपदीपनैवेद्यादींश्च कृत्वा स्थाल्या कलशमुखं पिदध्यात् ।

**अथ शिलान्यासः**

तत्र ईशानादिक्रमेण पद्मादिकलशान् संस्थाप्य तेषामुपरि नन्दाद्या शिलाः न्यसेत् । तत्रक्रमः

प्रथमम् ईशाने आधारशिलां न्यस्य तस्या मध्यगर्ते अक्षतोपरि मध्वाज्यपारदपञ्चरत्नगर्भितं पिहितमुखं पद्मकलशं निधाय आधारशिलां सदाशिवरुपिणीं तेजोमयीं ध्यात्वा–

**ॐ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे ।**

**तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥**

**ॐ मनो जूतिर्जूषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु । विश्वेदेवासऽइह मादयन्तामों ३ ॥ प्रतिष्ठ ॥**

इति पठित्वा

ॐ भूर्भुवः स्वः आधारशिले सुप्रतिष्ठिता भव । इति प्रतिष्ठापयेत् ।

ततस्तां सम्पूज्य मृदा दृढीकृत्य तस्या वामे दीपं च विन्यसेत् ।

ततः पद्मकलशोपरि प्राक्शिरसं नन्दाशिलाम्

**ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् ।**

**पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ।**

**ॐ नाभिर्मे चितं विज्ञानं पायुर्मेपचितिर्भसत् ।**

**आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः ॥**

**जङ्घाभ्यां पद्भ्यां धर्मोस्मि विशि राजा प्रतिष्ठिता ॥**

इति मन्त्राभ्यां संस्थाप्य गन्धादिभिः सम्पूज्य प्रार्थयेत् ।

**ॐ नन्दे त्वं नन्दिनीं पुंसां त्वामत्र स्थापयाम्यहम् ।**

**वेश्मनि त्विह सन्तिष्ठ यावच्चन्द्रार्कतारकाः ॥**

**आयुः कामं श्रियं देहि देववासिनि नन्दिनि ।**

**अस्मिन् रक्षा त्वया कार्या सदा वेश्मनि यत्नतः ॥**

*॥ इति नन्दाशिलास्थापनम् ॥*

तत आग्नेयकोणे पूर्ववत् आधारशिलां विन्यस्य पिहितमुखं महापद्मकलशं निधाय तदुपरि

**ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**

**स्थिरैरङ्गैस्तुष्टुवाँ꣡सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥**

**ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥**

इति मन्त्रद्वयं पठित्वा भद्राशिलां स्थापयित्वा सम्पूज्य प्रार्थयेत्

**ॐ भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ।**

**आयुर्दा कामदा देवि सुखदा च सदा भव ॥**

*॥ इति भद्राशिलास्थापनम् ॥*

ततो नैर्ऋत्यकोणे पूर्ववत् आधारशिलां स्थापयित्वा पिहितमुखं शङ्खकलशं निधाय तदुपरि

**ॐ जातवेदसे सुनवाम सोमररातीयतो निदहाति वेदः ।**

**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**

**ॐ वरुणस्योत्तम्भनमसि ... ॥**

इति मन्त्रद्वयं पठित्वा जयाशिलां संस्थाप्य गन्धादिभिः सम्पूज्य प्रार्थयेत् ।

**ॐ गर्गगोत्रसमुद्भूतां त्रिनेत्रां च चतुर्भुजाम् ।**

**गृहेऽस्मिन् स्थापयाम्यद्य जयां चारुविलोचनाम् ॥**

**नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि ॥**

इति जयाशिलास्थापनम् ।

ततो वायव्यकोणे पूर्ववत् अधारशिलां विन्यस्य पिहितमुखं विजय (मकर) कलशं निधाय तदुपरि

'**ॐ त्र्यम्बकं यजामहे । ॐ वरुणस्योतम्भनम् ...** ।' इति मन्त्रद्वयं पठित्वा रिक्ताशिलां संस्थाप्य गन्धादिभिः सम्पूज्य प्रार्थयेत् ।

**ॐ रिक्ते त्वं रिक्तदोषघ्ने सिद्धिभुक्तिप्रदे शुभे ।**

**सर्वदा सर्वदोषघ्नि तिष्ठास्मिंस्तत्र नन्दिनि ॥**

*॥ इति रिक्ताशिलास्थापनम् ।*

ततो वास्तुभूमेर्मध्ये पूर्ववत् आधारशिलां विन्यस्य पिहितमुखं सर्वतोभद्रकलशं निधाय तदुपरि

**ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ।**

**वस्नेव विक्रीणावहाऽइषमूर्जꣳशतक्रतो ॥**

इति मन्त्रेण संस्थाप्य गन्धादिभिः सम्पूज्य प्रार्थयेत् ।

**ॐ पूर्णे त्वं सर्वदा पूर्णं लोकानां कुरु काश्यपि ।**

**आयुर्दा कामदा देवि धनदा सुतदा तथा ॥**

**गृहाधारा वास्तुमयी वास्तुदीपेन संयुता ।**

**त्वामृते नास्ति जगतामाधारश्च जगत्प्रिये ॥**

*॥ इति पूर्णाशिलास्थापनम् ॥*

ततः पञ्चशिलासु अष्टधातुंश्च निक्षिप्य ॐ नन्दायै नमः । इत्यादि क्रमेण पुनः पूजयेत् । ततः सदीपं पायसवलिं दध्यक्षतबलिं वा दत्वा हस्तौ पादौ प्रक्षाल्याचम्य शान्तिकाध्यायं पठित्वा आर्चायाय गां दद्यात्

ॐ अद्येह... गोत्र... शर्माहं... कृतैतत्... शिलान्यासकर्मणः साङ्गतायै इमां गां (गोनिष्क्रयद्रव्यं वा)... गोत्राय... आचार्याय तुभ्यं संप्रददे ।

तथा अन्येभ्यो दक्षिणां दद्यात् ।

ॐ अद्येह... गोत्रः... शर्माहं कृतस्य शिलान्यासकर्मणो न्यूनातिरिक्तदोषपरिहारार्थम् इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाभागं विभज्यदातुं जले उत्सृजे ।

इति दक्षिणां दत्वा

**यान्तु देवेति** देवान् विसृज्य **कायेनवाचा** इति कर्मेश्वरार्पणं कृत्वा **यस्यस्मृत्ये**त्यादि प्रार्थयेत् ।

*॥ इति शिलान्यासविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| शिलान्यासः | = | जगमा ढुङ्गा राख्नु |
| लोहकीलकम् | = | फलामका किला |
| भूतोत्सादनम् | = | भूतहरूलाई पर हटाउनु |
| भुवम् | = | भूमिलाई |
| इष्टका | = | इँटा |
| उपशिला | = | जगमा राख्ने ढुङ्गाको आसनको निमित्त ढुङ्गा |
| व्यस्तपञ्चगव्यम् | = | अलग अलग गरी छुट्याइएको पञ्चगव्य |
| समस्तपञ्चगव्यम् | = | सबै मिलाइएको पञ्चगव्य |
| टङ्कोत्किरणमनुसृत्य | = | छिनाले लेखेर |
| पारदः | = | पारो |
| शैवालः | = | पानीसिमाली (पानीमा हुने मोटो किसिमको झ्याउ) |
| पञ्चकषायः | = | डुम्री, बेल, पलाँस, वर, पिपल यति पाँच थरीका पालुवा |

## अभ्यासार्थाः प्रश्नाः

१. **शिलान्यासस्य प्रतिज्ञासङ्कल्पवाक्यं लिखत ।**

२. **लोहकीलकनिखननमन्त्रं पूर्णं लिखत ।**

३. **पञ्चशिलासु पूज्यदेवतानां नामानि क्रमेण विलिखत ।**

४. **पञ्चशिलानामानि कानि ?**

५. **भद्राशिला कस्मिन् कोणे स्थाप्यते ? स्थापनमन्त्रश्च कः ? इति सुस्पष्टं विलिखत ।**

६. **वास्तुपुरुषपूजनमन्त्रः कः ?**

७. **उत्खातभूमौ सर्षपविकिरणमन्त्रान् विलिखत ।**

**शिलान्यासको सामग्री**

सामान्य पूजासामग्री भाग १, दियो, कलश, गणेश, कर्मपात्र, अर्घ, पञ्चामृत मिलाइएको र छुट्टाछुट्टै, पञ्चगव्य मिलाइएको र छुट्टाछुट्टै, थाली- ५, कलश- ५, पीठ मिलेका शिलान्यास गर्ने ढुङ्गा ५, आधार शिला ५, इँट ५, पूरा जगमा बेर्न पहेँलो रङ्गाएको धागो, आँप, चाँप, पिपलका पातहरू, सुनको प्रतिमा ११, सुनको तार २, दीपपात्र ५, फलामका किला ४, सर्सिउँ ,चन्दन, कुङ्कुम, सप्तमृत्तिका, पञ्चकषाय साँढेको सिङ पखालेको पानी, तीर्थजल, बली दिन दही अक्षता, पारो, पञ्चरत्न, सर्वौषधी, आँप, चाँप, पिपलका पालुवा, पानीसिमाली, धूप, बत्ती, कपूर, रोटी, नैवेद्य, फलफूल, पानमसला, दुबो, फूल आदि ।

### (ग) गृहप्रवेशः

**अथ गृहप्रवेशविधिः**

सुलग्ने शुभमुहूर्ते सपुत्रपत्नीसहितो यजमानः नवनिर्मितगृहस्य प्राङ्गणे आसनोपरि समुपविश्याचम्य दीपं प्रज्वाल्य **यद्देवेति** कर्मपात्रं कृत्वा सङ्कल्पं कुर्यात् ।

ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य अमुक गोत्र.... अहं मम अद्यकर्तव्यगृहप्रवेशकर्मणि दीपकलशगणेशपूजनपूर्वकमेतद् गृहावासस्य स्थैर्यसिद्धये आयुरारोग्यपुत्रपौत्रधनधान्यादिसमृद्धये शिवप्राप्तिकामनया नवनिर्मितगृहप्रवेशं करिष्ये । इति सङ्कल्प्य ब्राह्मणवरणं च कुर्यात् ।

ततः अर्घ्यं संस्थाप्य

**ॐ नमोस्त्वनन्तायेति** दीपं **ॐ गणानान्त्वेति** गणेशं **भूरसित्यादिना** कलशं च संपूज्य ।

ततः ब्राह्मणं कन्यां गां पुरतः कृत्वा स्वेष्टदेवताप्रतिमां दीपं-कलशं-गणेशं च समादाय नवं फलपल्लवादियुतं सदुग्धजलपूर्णं कलशं हस्ताभ्यां समादाय धारां कुर्वन्नेकवारं गृहं प्रदक्षिणी कृत्य स्वस्तिवाचनसहितमङ्गलगीतवादित्रतूर्यघोषादिकं कुर्वन् गृहं प्रविश्य प्रधान गृहमध्ये धान्योपरि जलपूर्णं कलशं स्थापयेत् ।

ततो गृहस्य स्थैर्यार्थं पुण्याहं शान्त्यध्यायं च वाचयित्वा ब्राह्मणादिभ्यः संपूज्य भोजयित्वा-दक्षिणां दत्वाऽऽशिषो गृहित्वा सुहृद्युक्तो भुञ्जीत ।

ततो गृहे यथासुखं पञ्चरात्रपर्यन्तं शयनाशनादिनिरवच्छेदेन कर्तव्यम् ॥

*॥ इति गृहप्रवेशविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| नवनिर्मितम् | = | नयाँ बनाएको |
| गृहम् | = | घर |
| प्राङ्गणे | = | घरबाहिर, आँगनमा |
| स्थैर्यम् | = | स्थिरता |
| पुरतः | = | अगाडि |
| सुहृद्युक्त | = | बन्धुबान्धवले सहित |
| शयनाशन | = | सुत्नु र खानु |
| निरवच्छेदेन | = | नछुटाईकन (अविच्छिन्न रूपले) |

## अभ्यासार्थाः प्रश्नाः

१. **गृहप्रवेशस्य सङ्कल्पवाक्यं लिखत ।**

२. **गृहप्रवेशस्य समये आवश्यक-कार्याणि कानि ?**

३. **गृहप्रवेशविधिं सङ्क्षेपेण लिखत ।**

**गृहप्रवेशको सामग्री**

सामान्य पूजाको सामग्री भाग १, दीयो, कलश, गणेश, अर्घ, पञ्चामृत, आँप, चाँप पिपलका पातहरू, सर्सिउँ, चन्दन, सप्तमृत्तिका, पञ्चरत्न, पञ्चपल्लव, सर्वौषधी, पुण्याहवाचनको सामान, गाई, कन्या, वाद्यवादनका सामग्री, धूप, बत्ती, कपूर, रोटी, नैवेद्य, फलफूल, दुबो, दक्षिणा भोजन आदि ।

एकादशः पाठः

# व्रतोद्यापनविधिः

**उद्यापनविधिः (व्रतप्रतिष्ठा)**

## (क) मण्डपपूजा

**अथ मण्डपपूजाविधिः**

### १. प्रायश्चित्तगोदानम्

शुभदिने शुभमुहूर्ते प्रातः नद्यादौ स्नात्वा पट्टवस्त्रं परिधाय सम्भृतसकलसामग्रिणं सम्पाद्य यथास्वं मण्डपादिकं निर्माय मण्डपान्तरे ईशानप्रदेशे ग्रहवेदीं नैर्ऋत्ये वास्तुवेदीं मध्ये प्रधानवेदीं तदुत्तरेऽग्निवेदीं च स्वगृह्योक्तविधिना निर्माय सपत्नीको यजमानः पूजास्थानमागत्य

**ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥**

इति मन्त्रं पठन् मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्य यदत्र संस्थितं भूतम् ।

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**

इति पठन् सर्षपादिविकिरणेन भूतानुत्सार्य मृगचर्माद्यन्यतमे शुभासने उपविश्याचम्य

**प्रायश्चित्तगोदानम्**

अद्येत्यादितिथ्याद्युल्लेखनान्ते (अमुक) गोत्रः (अमुक) प्रवरः सपत्नीकः (अमुक) शर्माहं मम सकलपापक्षयपूर्वकं श्रुतिस्मृतिपुराणोक्तफलावाप्तये विशेषतः श्रीमल्लक्ष्मीनारायण उमामहेश्वरादिदेवताप्रीतये यथाकालमारभ्य एतावत्कालपर्यन्तकृतानामेकादश्यादिव्रतानां प्रतिष्ठोद्यापनकर्मणि पूजादानादिकर्मणि चाधिकारसिद्धिपूर्वकम् एतत्स्थूलशरीरस्य विशुद्धयर्थं प्राजापत्याम्नायीभूतामिमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतं रौप्यखण्डं चन्द्रदैवतं यथानाम गोत्राय शर्मणे ब्राह्मणये तुभ्यमहं सम्प्रददे ॥ (ॐ स्वस्ति इति प्रतिवचनम्)

प्रार्थनाः

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे ॥**

ततो दानप्रतिष्ठा

ॐ अद्यकृतैतत् सर्वप्रायश्चित्तनिमित्तकगोदानकर्मणः (गोनिष्क्रयीभूतरौप्यखण्डदानकर्मणो वा) प्रतिष्ठा-साङ्गतासिद्धये दीयमानमिदं रौप्यखण्डं चन्द्रदैवतं (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।

*॥ इति प्रायश्चित्तगोदानम् ॥*

## २. प्रतिज्ञासङ्कल्पः

कर्मपात्रं कृत्वा यवकुशतिलजलान्यादाय

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रः (अमुक) शर्मा सपत्नीकोऽहं ज्ञाताज्ञातमनोवाक्कायसम्भूतमहापातकोपपातकनाशनपूर्वक भय-रोग-शोक-दारिद्रच-दौर्भाग्य-दुःख-प्रोद्भूतोत्पात–वैकृत्यबाधाऽल्पमृत्युनाशन-पूर्वकाक्षयविष्णुपुरवासकामो विशेषतः श्रुति-स्मृति-पुराणोक्त-फलावाप्तिपूर्वकं श्रीमल्लक्ष्मीनारायण श्रीमदुमामहेश्वरप्रीतये यथाकालमारभ्य एतावत्कालपर्यन्तकृतानामेकादश्यादिव्रतानां यथोक्तफलावाप्तये यथासादितसामग्रचोद्यापनमहं करिष्ये । तदङ्गत्वेन दीप-कलश-गणेशपूजनपूर्वकं पुण्याहवाचन-मातृकापूजन-नान्दीश्राद्ध-ग्रहपूजन-सर्वतोभद्रपूजनं हवनं च ब्राह्मणद्वारा करिष्ये ।

## ३. ब्राह्मणवरणम्

गन्धपुष्पाक्षतफलवस्त्रद्रव्यादि वरणसामग्रीं सम्पाद्य यवकुशजलान्यादाय वरणसामग्रीं च हस्तेनादाय वरणसङ्कल्पं कुर्यात् ।

हरिः ॐ तत्सत् ३ ॐ विष्णुः ३ अद्येहेत्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रः (अमुक) शर्मा सपत्नीकोऽहं मम ज्ञाताज्ञातमनोवाक्कायसम्भूतमहापातकनाशनपूर्वक-भय-रोग-शोक-दारिद्रच-दौर्भाग्य-दुःख-प्रोद्भूतोत्पात-वैकृत्यव्याध्यल्पमृत्युविनाशनपूर्वकाक्षयविष्णुपुरवासकामो विशेषतः श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वक-श्रीमल्लक्ष्मीनारायण–श्रीमदुमामहेश्वरप्रीतये यथाकालमारभ्य एतावत्कालपर्यन्तकृतानामेकादश्यादिव्रतानां यथोक्तफलावाप्तये यथासादितसामग्रिणोद्यापनमहं करिष्ये, तत्कर्मकर्तुं नानानामगोत्रान्नानानामशर्मणो ब्राह्मणानेभिश्चन्दनपुष्पाक्षतधौतोत्तरीय-स्वर्णाङ्गुलीयासन-जलपात्रादिभिराचार्य-ऋत्विक्-द्वारपाल-गणपति-ब्रह्मात्वेन च युष्मानहं वृणे "ॐ वृतास्म" प्रतिवचनम् ॥

ततः आचार्यादिभ्यस्तिलकम् ।

ततः पुण्याहवाचनं कृत्वा दीप-कलश गणेशान् स्वस्वमन्त्रेण सम्पूज्य मण्डप-ग्रह-वास्तुपूजां च स्वस्वविधिना निर्वर्त्य ग्रहवास्त्वादिनां होमं च कुर्यात् ।

**सर्वतोभद्र चक्र**



**द्रष्टव्यः खाली कोठाहरूमा सेतो हुन्छ ।**

## ४. सर्वतोभद्रपूजा

ततः मध्यस्थितप्रधानवेद्यां सर्वतोभद्रमण्डलं विलिख्य पूजामारभेत् ॥

सर्वतोभद्रमण्डलस्य मध्ये

**ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ॥**

**स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः** ॥ शु.य.वेद १३।३

इति मन्त्रेण मध्ये ब्रह्माणं पूजयेत् ।

उत्तरे

**ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्** ।

**भवा वाजस्य सङ्गथे** ॥ शु. वेद १२।११२

इति मन्त्रेण सोमं पूजयेत् ।

ईशानभागे

**तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्** ।

**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये** ॥ शु.य.वेद २५।१८

इति मन्त्रेण ईशानं पूजयेत् ।

पूर्वभागे

**ॐ त्रातारमिन्द्र मवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम्** ।

**ह्वयामि शक्रं पुरुहूतमिन्द्रꣳस्वस्तिनो मघवा धात्विन्द्रः** ॥ शु. वेद. २०।५०

इति मन्त्रेण इन्द्रं पूजयेत् ।

आग्नेये

**ॐ अग्निदूतं पुरोदधे हव्यवाहमुप ब्रुवे** ॥

**देवाँ २ आसादयादिह** ॥ शु.वेद. २२।१७

इति मन्त्रेण अग्निं पूजयेत् ॥

दक्षिणे

**यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे** ।

**देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि** ।

**अर्चिरसि शोचिरसि तपोऽसि** ॥ शु.वेद ३७।११ ।

इति मन्त्रेण यमं पूजयेत् ।

नैर्ऋत्ये

**ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ।**

**अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु** ॥ शु.वेद १२। ६२

इति मन्त्रेण निर्ऋतिं पूजयेत् ।

पश्चिमे

**ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्य ऋतसदनमासीद** ॥ शु.वेद ४।३६

इति मन्त्रेण वरुणं पूजयेत् ।

वायव्याम्

**ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि ।**

**नियुत्वान्सोमपीतये** ॥ शु.वेद २७।३२

इति मन्त्रेण वायुं पूजयेत् ।

वायुसोमयोर्मध्ये

**ॐ सुगा वो देवाः सदनाऽअकर्म यऽआजग्मेदꣳसवनं जुषाणाः ।**

**भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा** ॥ शु.वेद ८।१८

इति मन्त्रेण ध्रुवाद्यष्टवसून् पूजयेत् ।

सोमेशानयोर्मध्ये

**ॐ यऽएतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे ।**

**तेषाꣳसहस्रयोजनेव धन्वानि तन्मसि** ॥ शु.वेद १६।६३

इति मन्त्रेण एकादशरुद्रान् पूजयेत् ।

ईशानेन्द्रयोर्मध्ये

**ॐ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।**

**आवोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्यभ्यस्त्वा** ॥ शु.वेद ३३।६८

इति मन्त्रेण द्वादशादित्यान् पूजयेत् ।

इन्द्राग्न्योर्मध्ये

**ॐ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि** ॥ शु.वेद २०।३

इति मन्त्रेण अश्विनीकुमारौ पूजयेत् ।

अग्नियमयोर्मध्ये

**ॐ ओमासश्चर्षणीधृतो विश्वेदेवासऽआगत । दाश्वाꣳसो दाशुषः सुतम् ।**

**उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः** ॥ शु.वेद ७।३३

इति मन्त्रेण विश्वेदेवं पूजयेत् ।

यमनिर्ऋत्योर्मध्ये

**ॐ अभित्यं देवꣳसवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳरत्नधामभि प्रियं मतिं कविम्॥ ऊर्ध्वा यस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपास्वः । प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि** ॥ शु.वेद ४।२५

इति मन्त्रेण सप्तयक्षान् पूजयेत् ।

निर्ऋतिवरुणयोर्मध्ये

**ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ॥ पितरं च प्रयन्त्स्वः** ॥ शु.वेद ३।६

**ॐ कद्रुद्राय प्रचेतसे मीढुषमाय तव्यसे । वोश्रेम शन्तमं हृदे** ॥ ऋक् - १।३।२६

इति मन्त्रेण सर्पान् पूजयेत् ।

वरुणवायोर्मध्ये **अप्सरसामित्यप्सरसः** पूजयेत् ।

ब्रह्मसोमयोर्मध्ये

**ॐ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्** ॥

**श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातंतेऽअर्वन्** । शु. वेद २९।१२

इति मन्त्रेण स्कन्दं पूजयेत् ।

**तत्रैव–ऋषभाय नमः इति नन्दीश्वरं पूजयेत्** ।

**तत्रैव–"कद्रूदायेति शूलं पूजयेत्"** ।

**तत्रैव–"कूमारमिति महाकालं पूजयेत्"** ।

**ब्रह्मेशानयोर्मध्ये–अदितिरिति दक्षादिसप्तगणान् पूजयेत्** ।

**ब्रह्मेन्द्रयोर्मध्ये–तामग्निवर्णामिति** दुर्गां पूजयेत् ॥

तत्रैव

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्** ।

**समूढमस्य पाꣳसुरेस्वाहा** ॥ शु.वेद ५।१५

इति मन्त्रेण विष्णुं पूजयेत् ।

ब्रह्माग्न्योर्मध्ये

**ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।**

**असुं यऽईयुरवृकाऽऋतज्ञास्ते नोवन्तु पितरो हवेषु** ॥ शु.वेद १९।४९

इति मन्त्रेण स्वधां पूजयेत् ।

ब्रह्मयमयोर्मध्ये

**ॐ परं मृत्योऽअनुपरेहि पन्थां यस्तेऽअन्यऽइतरो देवयानात्** ॥

**चक्षुष्मते श्रृण्वते ते ब्रवीमि मानः प्रजाꣳरीरिषो मोत वीरान्** ॥ शु.वे. ३५।७

इति मन्त्रेण मृत्युरोगौ पूजयेत् ।

ब्रह्मनिर्ऋत्योर्मध्ये

**ॐ गणानान्त्वा गणपतिꣳहवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसोमम । आहमजानि गर्भधमात्वमजासि गर्भधम्** ॥ शु.वेद २३।१९

इति मन्त्रेण गणपतिं पूजयेत् ।

ब्रह्मवरुणयोर्मध्ये

**ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः** ॥ शु. वे. ३६।१२

इति मन्त्रेण अपः पूजयेत् ।

ब्रह्मवाय्वोर्मध्ये

**ॐ मरुतो यस्य हि क्षये पाथा दिवो विमहसः । ससुगोपातमो जनः** ॥ शु.वे. ८।३१

इति मन्त्रेण पृथ्वीं पूजयेत् ।

तत्रैव

**ॐ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्यऽउन्मत्तꣳसर्पदेवजनेभ्यो प्रतिपदमयेभ्यः कितवमीर्यतायाऽअकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम्** ॥ शु.वे. ३०।८

इति मन्त्रेण गङ्गादिनदीः पूजयेत् ।

तत्रैव

**स्योना पृथिवि** इति ।

**धाम्नो धाम्नो राजमिति** सप्तसागरान् पूजयेत् ।

तदुपरि मेरुनाममन्त्रेण मेरुं पूजयेत् ।

उदीचीमारभ्य सोमादिसमीपे क्रमेण गदां त्रिशूलं वज्रं शक्तिं दण्डं खड्गं पाशम् अङ्कुशं पूजयेत् ।

तद्बाह्ये उत्तरादिक्रमेण गौतमं भारद्वाजं विश्वामित्रं कश्यपं जमदग्निं वसिष्ठम् अत्रिं वायव्ये अरुन्धतीं च पूजयेत् ।

तद्बाह्ये पूर्वादिक्रमेण पूजयेत् ।

ऐन्द्रीं कौमारीं ब्राह्मीं वाराहीं चामुण्डां वैष्णवीं माहेश्वरीं वैनायकीम् इत्यष्टौ शाक्तीः पूजयेत् । इत्थं मण्डलदेवताः सम्पूज्य सायङ्काले कर्ता सुप्रक्षालितपाणिपादः सर्वतोभद्रसमीपस्थासने उपविश्याचम्य पूर्वाभिमुखो भूत्वा दीपकलशगणेशादीनां तत्तन्मन्त्रेण पूजयेत् ।

*॥ इति मण्डपपूजाविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| शुभदिने | = | शुभदिनमा |
| शुभमुहूर्ते | = | शुभमुहूर्तमा |
| पट्टवस्त्रम् | = | पाटको वस्त्र वा रेसमी वस्त्र |
| यथास्वम् | = | आफ्नो परम्पराअनुसारको |
| मण्डपान्तरे | = | मण्डपको भित्र |
| स्वगृह्योक्तम् | = | आफ्नो गृहयसूत्र अनुसारको |
| स्व–स्वमन्त्रेण | = | आआफ्नो पूजाविधिले । |
| धौतोत्तरीयम् | = | धोती र उत्तरीय (पछ्यौरा) |
| तद्बाह्ये | = | त्यो भन्दा बाहिर |
| आरम्भः | = | थालनी |

## अभ्यासार्थाः प्रश्नाः

१. **प्रायश्चित्तगोदानप्रयोगं प्रदर्शयत ।**

२. **"अपसर्पन्तु ते भूता" इति मन्त्रं पूरयत ॥**

३. **सर्वतोभद्रमण्डलस्य पूजाविधिं संक्षेपेण लिखत ।**

४. **सर्वतोभद्रमण्डले विष्णोः पूजनमन्त्रं लिखत ।**

५. **सर्वतोभद्रमण्डले अपां पूजनं कथं क्रियते ?**

६. **सर्वतोभद्रमण्डलचक्रं रचयत ।**

**व्रतोद्यापनको सामान्यसामग्री**

हवनको पूजासामग्री, मातृकापूजाको सामग्री, आभ्युदयिक श्राद्धको सामग्री, मण्डप-पूजाको सामग्री, वास्तुपूजाको सामग्री, सर्वतो भद्रपूजाको सामग्री, ग्रहशान्तिको र शय्याको सामग्री, देवताको सुनको प्रतिमा, तामाको कलश, तामाको थाली, पञ्चपल्लव, पञ्चरत्न, पञ्चामृत, सप्तमृत्तिका, सर्वौषधी, सौभाग्यको सामग्रीहरू, पूर्णपात्र, कर्मपात्र, पानी, झारी, बाटा, भेटी, गोदान र दक्षिणा आदि ।

**सर्वतोभद्रपूजाको सामग्री** : वेदीमा बिछ्याउने कपडा, सुनको लामो तार, रेखी हाल्ने पिठो, अबिर, बेसार, जौको पिठो, वेलपत्रको धूलो, सुनको प्रतिमा, नरिवल, छाता, चँदुवा, भेटी, दक्षिणा आदि ।

**(ख) अथ एकादशीव्रतोद्यापनविधिः**

सर्वतोभद्रमध्ये कलशविधिना कलशं संस्थाप्य तदुपरि ताम्रस्थालीं निधाय तत्र शङ्ख-चक्र-गदा-पद्मयुतां लक्ष्मीसहितां नारायणप्रतिमां तत्पूजाविधिना (एकादशीव्रतपूजाविधिना) सम्पूज्य ॥ तत्र विविधानि नैवेद्यादीनि समर्प्य रात्रौ जागरणादिकं कुर्यात् । प्रातः पूजापद्धत्युक्तदेवान् प्रत्येकं पायसतिलाज्यैर्हुत्वा देवं **इदं विष्णुरिति** मन्त्रेण **पुरुषसूक्तेन** वाष्टोत्तरशतं हुत्वा देवस्योत्तरपूजां विधाय प्रार्थयेत् ।

**कृष्णाय वासुदेवाय जगतः परमात्मने ।**

**शरण्यायाप्रमेयाय गोविन्दाय नमो नमः ॥**

**नमः स्थूलाय सूक्ष्माय नमो व्यापकरूपिणे ।**

**अनन्ताय जगद्धात्रे ब्रह्मणेऽनन्तमूर्त्तये ॥**

**अव्यक्तायाऽखिलेशाय चिद्रूपाय गुणात्मने ।**

**नमो मूर्त्ताय सिद्धाय पराय परमात्मने ॥**

**देवदेवाय वन्द्याय पराय परमेष्ठिने ।**

**कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते नमः ॥**

**मयाऽद्यास्मिन् व्रते देव यदपूर्णं कृतं विभो !**

**सर्वं भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥**

द्वादशब्राह्मणेभ्यो पक्वान्नसहितद्वादशपूर्णघटान् दत्वा शय्यादानं कुर्यात् ।

**अथ शय्यादानम्**

कर्ता आचम्य ॐ अद्येत्यादि देशकालाद्युल्लेखनान्ते अमुकगोत्रोऽमुकशर्मा सपत्नीकोऽहं मम श्रुतिस्मृतिपुराणोक्तफलावाप्तये यथाकालमारभ्य एतावत्कालपर्यन्तं कृतस्यामुकैकादशीव्रतस्योद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये श्रीपरमेश्वरामुकदेवताप्रीतये अमुकगोत्रामुकनामानौ द्विजदम्पती यथामिलितोपचारैरहं पूजयिष्ये ।

ततः पादप्रक्षालनम् ।

अर्घ्यम्

**भूमिदेवाग्रजन्मासि केशवस्य प्रियः सदा ।**

**प्रत्यक्षदेवस्त्वं गृहृ मत्तोऽर्घ्यं द्विजसत्तम ॥**

आचमनीयं यज्ञोपवीतम् आभूषणं तिलकम् अक्षतान् पुष्पं पुष्पमाला धूपः दीपः भागद्वयं नैवेद्यं फलं ताम्बूलं द्रव्यं नीराजनं दक्षिणां च कृत्वा प्रार्थयेत् ।

**पूजितस्त्वं यथाशक्तया पूजितः परमेश्वरः ।**

**ऐहिकामुष्मिकीं देव ! कार्यसिद्धिं ददस्व मे ॥**

नमस्कारः ॐ द्विजदम्पतीभ्यां नमः ।

ततः सोपस्करशय्यायै नमः इति गन्धादिना शय्यां सम्पूज्य वारिणाऽभिषिच्य कुशतिलजलान्यादाय ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्मा सपत्नीकोऽहं मम श्रीपरमेश्वरामुकदेवताप्रीतये कृतस्याऽमुकव्रतस्योद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धयेऽमुकगोत्राय अमुकशर्मणे ब्राह्मणाय सपत्नीकाय सोपकरणशय्यादानत्वेन तुभ्यमहं सम्प्रददे ।

प्रार्थना

**यथा न कृष्णशयनं शून्यं सागरजातया ।**

**शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥**

**यस्मादशून्यं शयनं केशवस्य शिवस्य च ।**

**शय्या ममाप्यशून्यास्तु तस्माज्जन्मनि जन्मनि ॥**

दक्षिणाद्रव्यमादाय

ॐ अद्यकृतैतत्सोपस्करशय्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्राया-मुकशर्मणे ब्राह्मणाय सपत्नीकाय शय्यादानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे ॥

**गोदानम्-**

गां सम्पूज्य – ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्मा सपत्नीकोऽहं मम यथाकालमारभ्यैतावत्कालपर्यन्तमाचरि तस्यामुकव्रतोद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धिपूर्वकामुकदेवताप्रीतये स्वर्णश्रृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं कांस्यदोहनीं प्रवाललाङ्गूलभूषितां सुवर्णतिलकसंयुतां वस्त्रयुगच्छन्नां सवत्सामिमां गां रुद्रदैवताकाममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा

ॐ अद्य कृतैतत्सालङ्कारगोदानप्रतिष्ठासाङ्गतासिद्धये इदं रजतं चन्द्रदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

ततो परिधानीयवस्त्राण्यग्रे कृत्वा सम्पूज्य परिधानीयवस्त्रेभ्यो नमः । इति कुशजलेन सम्प्रोक्ष्य सङ्कल्पः ॐ अद्येत्यादि अमुकदेवताप्रीतये एतावत्कालपर्यन्तं कृतस्यामुकव्रतस्योद्यापनकर्मणः

साङ्गतासिद्धये एतद्वस्त्रतन्तुसम्मितावच्छिन्नवैराजलोकप्राप्तिपूर्वकशतकाद्यवच्छिन्नवैकुण्ठ-भवनप्राप्तिकामः श्रीपरमेश्वरप्रीतये इमानि श्वेत-कृष्ण-रक्त-पीत-हरितादिरङ्गपूतानि परिधानीयवस्त्राणि बृहस्पतिदैवतानि यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

प्रार्थना (श्वेतस्य)

**शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् ।**

**सुवेशधारि त्वं यस्मादतः शान्तिं प्रयच्छ मे ॥**

रक्तस्य

**रक्तवस्त्रं शुभं यस्मादादित्यस्य प्रियं सदा ।**

**प्रदानादस्य मे सूर्यः प्रीतः शान्तिं प्रयच्छ मे ॥**

कृष्णस्य

**धर्मराजेन विधृतं कृष्णवस्त्रं सुशोभनम्।**

**सर्वपापप्रणाशोऽस्तु कृष्णवस्त्रप्रदानतः॥**

दानप्रतिष्ठा

अद्य कृतैतत्परिधानीयवस्त्रदानकर्मणः प्रतिष्ठासाङ्गतासिद्ध्यर्थं यद्द्रव्यं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे॥

**भूषणदानम्–**

कुशजलेन '**आभरणेभ्यो नमः**' इति सम्प्रोक्ष्य सम्पूज्य सङ्कल्पः

अद्येत्यादि मम सार्वदिकविरहकालानवस्थित्युत्तमरूपसौभाग्ययुतसुस्थितसप्तकुलाधिकसर्वगुणात्मीय विष्णुकुलजन्मकामः श्रीपरमेश्वरप्रीतये इमानि हेम-रौप्य-मुक्तामण्यादिमयाभरणानि विष्णुदैवतानि यथानामगोत्राय तुभ्यमहं सम्प्रददे।

प्रार्थना सुवर्णस्य

**हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥**

रौप्यस्य

**शिवनेत्रोद्भवं पुण्यं रजतं पितृवस्त्रभम्।**

**तस्मादस्य प्रदानेन रुद्रः सम्प्रीयतां मम॥**

अङ्गुलीयकस्य

**हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम्।**

**धर्मप्रदं प्रयच्छामि प्रीयतां कमलापतिः॥**

वलयस्य

**काञ्चनं हस्तवलयं रूपकान्तिसुखप्रदम्।**

**विभूषणं प्रयच्छामि प्रीयतां कमलापतिः॥**

कुण्डलस्य

**क्षीरोदमथने पूर्वमुद्धृतं कुण्डलद्वयम्।**

**श्रिया सह समुद्भूतं ददे श्रीः प्रीयतामिति॥**

मुक्तायाः

**ताम्रवर्णसमाभासा रत्नेष्वधिकमुत्तमाः।**

**मुक्ताः समुद्भवाः सन्तु भुक्तिमुक्तिप्रदा मम॥**

**रत्नेषु मणिषु चैव सर्वे देवा व्यवस्थिताः ।**

**तथा शान्तिं प्रयच्छन्तु मणिरत्नं ददाम्यहम् ।**

ॐ अद्य कृतैतद्धेम-रौप्य-ताम्र-मुक्तामयाभरणदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

हेम-रौप्य-पित्तल-कांस्यादि भोजनपाकभाण्डादिदानम् ।

कुशवारिणा 'पाकभोजनपात्रेभ्यो नमः' इति सम्प्रोक्ष्य सम्पूज्य च संस्पृश्य

ॐ अद्येत्यादि सौभाग्या-वैधव्यसर्वगुणोपेतभृत्य-मित्रादिनत्ययुत-तत्त्वसुखानुत्तमरूपावाप्तिकाम इमानि हेम-रौप्य-ताम्र-पित्तल-कांस्याऽयसादिघटितानि पानादिपात्राणि विष्णुदैवतानि यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**आपाकब्रह्मरूपाःस्थ भाण्डनामानि जन्तवः ।**

**तत्प्रदानात् प्रजापुष्टिः सर्वत्रास्तु ममाज्ञया ॥**

**भाण्डरूपाणि यान्यत्र कल्पितानि मया किल ।**

**भूत्वा सत्त्वानुरूपाणि उपतिष्ठन्तु तानि वै ॥**

स्वर्णपात्रस्य

**जन्मान्तरसहस्रेषु यत्कृतं दुरितं मया ।**

**स्वर्णपात्रप्रदानेन शान्तिरस्तु सदा मम ॥**

पित्तलस्य

**पापानि यान्यनेकानि कामाकामकृतानि च ।**

**पित्तलस्य प्रदानेन तानि नश्यन्तु मे सदा ॥**

दानप्रतिष्ठा

अद्यकृतैतद्धेम-रौप्य-ताम्र-पित्तलायसकांस्यादिनाना भोजनपाकादिपात्रदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्माणाय तुभ्यमहं सम्प्रददे ।

अन्नदानम्

कुशजलेन 'सव्यञ्जनतण्डुलेभ्यो नमः' सम्प्रोक्ष्य सम्पूज्य संस्पृश्य

ॐ अद्येत्यादि मम सर्वकामसमृद्धि-श्रीमत्सूर्यसङ्काशविमानारोहणबहुगन्धर्वोपगीयमान-बह्वप्सरोगण-सेव्यमानतण्डुलसमसङ्ख्यासहस्रवर्षावच्छिन्नस्वर्गवासार्थं बहुपुरुषाहारपरिमितान् ससूपतण्डुलान् प्रजापतिदैवतान् यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**पावनाः सर्वयज्ञेषु प्रशस्ता होमकर्मणि ।**

**तस्मात्तण्डुलदानेन प्रीयतां विश्वदेवताः ॥**

दानप्रतिष्ठा

अद्य कृतैतत्सव्यञ्जनतण्डुलदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**छत्रदानम्**

कुशजलेन '**छत्राय नमः**' सम्प्रोक्ष्य सम्पूज्य अद्येत्यादि यमपथाधिकरणकतीक्ष्णभयघोरातपवारणार्थम् इदं छत्रमुत्तानाङ्गिरो दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

प्रार्थना

**सर्वेषां चैव दानानां छत्रमातपवारणम् ।**

**सुखदं मोक्षदं यस्मात्तस्माच्छान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा–

अद्य कृतैतत् छत्रदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानाम गोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**उपानद्दानम्**

कुशजलेन '**उपानद्भ्यां नमः**' सम्प्रोक्ष्य सम्पूज्य

अद्य यमपथाधिकरणकदुर्गभूसन्तरणार्थं तप्तवालुकासिकण्टकाङ्कितसन्तरणोत्पन्नसुखित्वकाम इमे उपानहौ उत्तानाङ्गिरो दैवते यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**उपानहौ प्रदास्यामि कण्टकादिनिवारणे ।**

**सर्वस्थानेषु सुखदं ताभ्यां शान्तिं प्रयच्छताम् ॥**

दानप्रतिष्ठा

अद्य कृतैतद् उपानद्दानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**यष्टिदानम्**

कुशजलेन '**यष्टयै नमः**' सम्प्रोक्ष्य सम्पूज्य

अद्य नेत्रहीनदुर्बलानां सुखेन मार्गगमनार्थं दुष्टसत्वभयनिवारणार्थम् इमां यष्टिं वनस्पतिदैवताकां यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**यतिभ्यो वैणवं दण्डं द्विजेभ्यो हि खनित्रकम् ।**

**प्रदाय परलोकेऽसौ यमदण्डं न गच्छति ॥**

दानप्रतिष्ठा

अद्य कृतैतद् यष्टिदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

व्यजनदानम्

कुशयवजलेन **'व्यजनाय नमः'** संप्रोक्ष्य सम्पूज्य

अद्य मम घर्मकाले जनिष्यमाणशरीरसुखार्थम् इदं व्यजनं समीरदैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**दुःखापहं सुखप्राप्तिर्दाहशान्तिकरं परम् ।**

**तस्माद् व्यजनदानाच्च तापाच्छान्तिं प्रयच्छतु ॥**

दानप्रतिष्ठा

अद्य कृतैतद् व्यजनदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**पूर्णपात्रदानम्**

ॐ अद्येत्यादि मया कृतस्यैकादशीव्रतस्य यथोक्तफलावाप्तये श्रीमल्लक्ष्मीनारायणप्रतिमापूजन-हवनशय्यादानादिकर्मणः परिपूर्णतासिद्धये इदं तण्डुलपूर्णं सफलं सद्रव्यं पूर्णपात्रं प्रजापतिदैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**प्रतिमादानम्**

अद्येह श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वकं श्रीमल्लक्ष्मीनारायणप्रीतये कृतस्यैकादशी-व्रतस्योद्यापनाङ्गत्वेन सुपूजितां सोपस्करसौवर्णीमिमां लक्ष्मीनारायणप्रतिमां लक्ष्मीनारायणप्रीतये अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**हर ! प्रसीद देवेश ! सर्वलोकवरप्रद !**

**तव मूर्तिप्रदानेन व्रतं सम्पूर्णमस्तु मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सुपूजित-स्वर्णनिर्मितसोपस्करश्रीलक्ष्मी-नारायणप्रतिमादानकर्मणः प्रतिष्ठा-साङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**गोदानम्**

ॐ अद्येत्यादि मत्कृतस्यैकादशीव्रतस्योद्यापनकर्मणः साङ्गतासिद्धये न्यूनातिरिक्तपरिपूर्णार्थम् इमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतममुकदैवतं यथानाम गोत्रायामुकशर्मणे तुभ्यमहं सम्प्रददे ।

प्रार्थना–

**नमस्ते कपिले देवि ! संसारार्णवतारिणि !**

**मया दत्ता द्विजेन्द्राय प्रीयतां च जनार्दनः ॥**

दानप्रतिष्ठा

अद्य कृतैतत् गोदानप्रतिष्ठार्थं यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

*॥ इत्येकादश्युद्यापनम् ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| सर्वतोभद्रमध्ये | = | सर्वतोभद्रको बिचमा |
| तदुपरि | = | त्यसको माथि |
| समर्प्य | = | चढाएर |
| द्वादशब्राह्मणान् | = | बाह्र ब्राह्मणलाई |
| वारिणा | = | जलले |
| शैय्या | = | एक दम्पतिलाई आवश्यक पर्ने सम्पूर्ण सामानहरू |
| सव्यञ्जनतण्डुलैः | = | तरकारीले सहित चामल |

## अभ्यासार्थाः प्रश्नाः

१. **हवनीयं द्रव्यं किम् ?**

२. **एकादशीव्रतोद्यापनस्य विशेषकार्यं लिखत ।**

३. **देवस्योत्तरपूजानन्तरं क्रियमाणं प्रार्थनामन्त्रं लिखत ।**

४. **गोदानप्रयोगं प्रदर्शयत ।**

५. **उपानद्दानप्रयोगं दर्शयत ।**

६. **अन्नदानं कथं क्रियते लिखत ।**

७. **यष्टिदानविधिः कः ? लिखत ।**

८. **एकवर्षे एकादशीतिथयः कति भवन्ति ?**

**एकादशी-व्रतोद्यापनको सामग्री**

लड्डु-गुड-घेवर-जिलेबी-सेल-कसार-सत्तु-बारा-दुध-भात-दही-फिनी-स्वारी-पूवा-पेड़ा-चमचम-तिलौरी-बर्फी-चिनीका रोटी-चीनी-केरा-घिउ-मुगदल-गुड-भात आदि ।

सामान्य व्रतप्रतिष्ठाको सम्पूर्ण सामग्री, एकादशीव्रतपूजाको सामग्री, तामाका २४ कलश र २४ थाली, सुनको विष्णुको २४ प्रतिमा, धान २४ चारकुने, गोदान २४ ओटा, खिरले १०८ हवन इत्यादि ।

**शय्यासामग्री**

खाट, सतरन्जी, डसना, सिरक, तकिया, दोलाई, खास्टो, झुल, गुन्द्री, बालिष्ठा, चँदुआ, राडी, काम्ला, तन्ना, बेठन ।

**पुरुषको पोसाक-** धोती, भोटो, सुरुवाल, मयलपोस, पटुका, वेस्टकोट, टोपी, गलबन्दी, मोजा, जुत्ता, गहना, बाजु, कण्ठा, औँठीहरू ।

**स्त्रीको पोसाक–** धोती, सारी, चोलो, पटुका, खास्टो, मोजा, जुत्ता, ऐना, काँगियो, धागो, टीका, बट्टा, चुरा, सिन्दुर, गाजल, छाप, पोते, तिलहरी, औँठी, कल्ली, ढुङ्ग्री, मुन्द्री, फुली, सन्दुक, खराउ, लट्टी, छाता, पङ्खा, गाग्रो, लोटा, तसला, तपेस, कसौँडी, ताप्के, बाटा, घल्चा, थाल, कचौरा, रिकापी, गिलास, अङ्खोरा, पानस, डाडु, पनिउँ, सनासो, चिम्टा, ओधान, नाला चुलेसी, चक्कु, बेलना, तावा, कराही, दाल, चामल, पिठो, नुन, घिउ, मसला, तेल, दियो, पञ्चपाला, नाङ्ग्लो, दही, दुध, मिठाई, अचार, पान, मसला, पूजाको सामान, लेख्ने-पढ्ने सामान, आदि । व्यवहारमा चाहिने सम्पूर्ण सामानहरू ।

## (ग) श्रीरामनवमीव्रतोद्यापनविधिः

**अथ श्रीरामनवमीव्रतोद्यापनविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च, तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि सुवर्णनिर्मितां जानकीसहित-श्रीरामप्रतिमां तत्पूजाविधिना(रामनवमी-पूजाविधिना) सम्पूज्य रात्रौ जागरणं कुर्यात् । प्रातर्देवस्योत्तरपूजां विधाय पायससमिच्चरुतिलैः **पुरुषसूक्तेन मूलमन्त्रेण** वा १०८ होमं समाप्य श्रीरामं प्रार्थयेत् ।

**नतोऽस्मि देवदेवेश ! श्रीराम ! त्वत्पदाम्बुजम् ।**
**यच्चिन्त्यते कर्मपाशाद् हृदि नित्यं मुमुक्षुभिः ॥**
**मायया गुणमय्या त्वं सृजस्यसि विलुम्पसि ।**
**अतस्त्वत्पादकमले भक्तिरेव सदाऽस्तु मे ॥**
**संसारभयतप्तानां भैषज्यं भक्तिरेव ते ॥**

वटु-ब्रह्मचारिभ्यः फल-वस्त्र-वराटकसहितनववंशदण्डदानम् ॥

षोडशब्राह्मणेभ्यः सहिरण्यघृततिलताम्रपात्रदानम् ।

कन्याकुमारपूजां विधाय प्रतिमादानं पूर्णपात्रदानं शय्यादानं च पूर्ववत् कुर्यात् ।

अद्येत्यादि अमुकगोत्रोऽहं मम श्रीरामप्रीतये कृतस्य यथाकालमारभ्यैतावत्काल पर्यन्तं कृतस्य रामनवमीव्रतस्योद्यापनाङ्गत्वेन सुपूजितां सोपस्करां सौवर्णीं रामप्रतिमां श्रीरामप्रीतये अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

प्रार्थना

**इमां स्वर्णमयीं रामप्रतिमां समलङ्कृताम् ।**

**चित्रवस्त्रयुगच्छन्नां रामाय राघवाय वै ॥**

**श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सुपूजित-स्वर्णनिर्मित-सोपस्कर-रामप्रतिमादानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**गोदानम्**

अद्येत्यादि मम कृतस्य रामनवमीव्रतस्योद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्त-परिपूर्णार्थमिमां गां रुद्रदैवत्यां (तन्निष्क्रयीभूतं द्रव्यं वा) यद्द्रव्यं तद्दैवतम् अमुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थ देवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा

अद्य कृतैतदित्यादि । अन्यत्सर्वं पूर्ववत् ।

*॥ इति रामनवमीव्रतप्रतिष्ठा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| वटुब्रह्मचारी | = | ब्रह्मचारी वटुक |
| वस्त्रम् | = | कपडा |
| नववंशदण्डः | = | नयाँ बाँसको लौरो |
| सहिरण्यम् | = | सुनले सहित |
| तिलपात्रम् | = | तिल हालेको भाँडो |

## अभ्यासार्थाः प्रश्नाः

१. **श्रीरामनवमीव्रतोद्यापने विशेष कार्याणि कानि ?**

२. **प्रधानदेवतायाः प्रार्थनामन्त्रं लिखत ।**

३. **कन्याकुमारपूजायाः सङ्कल्पवाक्यं लिखत ।**

**श्रीरामनवमी-व्रतोद्यापनको सामग्री**

सामान्य व्रत प्रतिष्ठाको सम्पूर्ण सामग्री, रामनवमी पूजाविधिको सम्पूर्ण सामग्री, सीता र हनुमानसहित रामचन्द्रको सुनको प्रतिमा, गौरीशङ्करको सुनको प्रतिमा, तिलपात्र-१६, जनै-१६ जोर, सप्तधान्य, कलश-८, हवनको लागि तिल र घिउ, भेटी, शय्याको सामग्री र दक्षिणा आदि ।

## (घ) हरितालिकाव्रतोद्यापनविधिः

**अथ हरितालिकोद्यापनविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च, तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि रजतनिर्मितां वृषारूढां महादेवप्रतिमां सुवर्णनिर्मितां गौरीप्रतिमां च तत्पूजनविधिना (हरितालिकापूजाविधिना) सम्पूज्य रात्रौ जागरणं कुर्यात् ।

प्रातर्देव्या उत्तरपूजां विधाय प्रार्थना

**नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने ।**
**नन्दि-भृङ्गि-महाकालगणयुक्ताय शम्भवे ॥**
**शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे ।**
**शिवायै सर्वमाङ्गल्यै शिवरूपे जगन्मये ॥**
**संसारभयसन्तापात् त्राहि मां सिंहवाहिनि !**
**येन कामेन देवेशि पूजितासि महेश्वरि ! ॥**
**राज्य-सौभाग्य-सम्पत्तिं देहि मामम्ब पार्वति !**

षोडशब्राह्मणेभ्यः सौभाग्यद्रव्यवस्त्रसहितषोडशपात्रदानम् ॥ शय्यादानदिने च तान् दत्वा

पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि अमुकगोत्रोऽहं मम श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वकं श्रीउमामहेश्वरप्रीतये कृतस्य हरितालिकाव्रतस्योद्यापनाङ्गत्वेन सुपूजितोपस्करां रौप्यनिर्मितमहेश्वरप्रतिमां सुवर्णनिर्मितगौरिप्रतिमामुमामहेश्वरदेवतामुमामहेश्वरप्रीतये यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**शम्भो ! प्रसीद देवेश ! सर्वलोकवरप्रद !**
**तव मूर्तिप्रदानेन व्रतं सम्पूर्णमस्तु मे ॥**

**दानप्रतिष्ठा**

अद्य कृतैतदुमामहेश्वरप्रतिमादानकर्मणः साङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**गोदानम्**

ॐ अद्येत्यादि मया कृतस्य हरितालिकाव्रतस्योद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्त-परिपूर्णार्थम् इमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतं द्रव्यम् अमुकदैवतं यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थ देवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

**दानप्रतिष्ठा**

अद्य कृतैतत् सालङ्कारगोदानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्द्रव्यं तद्देवताकम् अमुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

इति हरितालिकोद्यापनम् । अन्यत्सर्वं पूर्ववत् ।

## शब्दार्थाः

| | | |
|---|---|---|
| रजतनिर्मिताम् | = | चाँदीबाट निर्मित |
| बृषारूढम् | = | साँढेमा चढेको |
| महादेवप्रतिमाम् | = | महादेवको चित्र अङ्कित प्रतिमा |
| गौरीप्रतिमाम् | = | गौरीको चित्र अङ्कित प्रतिमा |
| पूजाविधिना | = | पूजाविधिले |
| दत्वा | = | दिएर |

## अभ्यासार्थाः प्रश्नाः

१. **हरितालिकाव्रतोद्यापने विशेषदानवस्तूनि कानि ?**

२. **प्रधानदेवस्योत्तरपूजानन्तरं क्रियामाणं प्रार्थनामन्त्रं लिखत ।**

३. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

४. **गोदानप्रयोगं प्रदर्शयत ।**

## हरितालिकाव्रतोद्यापनको सामग्री

सामान्य व्रतप्रतिष्ठाको सम्पूर्ण सामग्री, हरितालिकापूजाविधिको सम्पूर्ण सामग्री, सौभाग्यको सामान, द्रव्य, गौरीशङ्करको सुन-चाँदीको प्रतिमा, वस्त्र, पक्वान्न, नैवेद्य, पान, ल्वाङ-सुपारी, दियो, कलश, फूल–माला, वंशपात्र-१६, हवन १०८, भेटी, शय्याको सामग्री र दक्षिणा इत्यादि ।

## (ङ) ऋषिपञ्चमीव्रतोद्यापनविधिः

**अथ ऋषिपञ्चम्युद्यापनविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च, तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि सौवर्णीः ऋषिप्रतिमाः संस्थाप्य तत् पूजाविधिना (ऋषिपञ्चमीपूजाविधिना) पूजां निर्वर्त्य रात्रौ जागरणं कुर्यात् । प्रातः ऋषीणामुत्तरपूजां विधाय तिलसर्पिषा अधस्तनमन्त्रेण १०८ सङ्ख्याकं हवनं कुर्यात् ।

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।**

**सप्तापः स्वपतोलोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ।**

इति मन्त्रेण होमं समाप्य ऋषीन् प्रार्थयेत् ।

**नमोऽस्तु ऋषिवृन्देभ्यो देवर्षिभ्यो नमो नमः ।**
**सर्वपापहरेभ्यो हि वेदविद्भ्यो नमो नमः ॥**
**एते सप्तर्षयः सर्वे भक्त्या सम्पूजिता मया ।**
**सर्वं पापं व्यपोहन्तु ज्ञानतोऽज्ञानतः कृतम्॥**
**न्यूनातिरिक्तकर्माणि मया यानि कृतानि च ।**
**क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः ॥**

ततः ब्राह्मणेभ्यो वस्त्रालङ्कारदक्षिणादानम् । शय्यां चैतेभ्यो दद्यात् ।

**पूर्णपात्रदानम् । प्रतिमादानम्**

अद्येत्यादि अमुकदेव्यहं मम रजस्वलावस्थायां ज्ञाताज्ञातकृतऋतुसम्पर्कजनितदोषनिवृत्तये सप्तर्षिप्रीत्यर्थं कृतस्य ऋषिपञ्चमीव्रतस्य यथोक्तफलावाप्तये उद्यापनाङ्गत्वेन संपूजिताः सौवर्ण्यः सारुन्धतिकाः सप्तर्षिप्रतिमाः सप्तर्षिप्रीतये अमुक गोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**तपोधना ज्योतिरूपा ऋषयो मे प्रसीदतः ।**
**भवतां मूर्तिदानेन व्रतं सम्पूर्णमस्तु मे ॥**

**दानप्रतिष्ठा**

अद्य कृतैतत् संपूजितसारुन्धतिकसप्तर्षिप्रतिमादानकर्मणः प्रतिष्ठासाङ्गतासिद्धये इदम् अमुकद्रव्यममुकदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

**गोदानम्**

अद्य कृतैतदृषिपञ्चमीव्रतोद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्तपरिपूर्णार्थम् इमां गां रुद्रदैवत्यां तन्निष्क्रयं वा यद्देयं तद्दैवतं यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

**प्रार्थना**

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थ देवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा

अद्य कृतैतद्गोदानप्रतिष्ठासाङ्गतासिद्धये यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । अन्यत्सर्वं पूर्ववत् ॥

*॥ इति ऋषिपञ्चम्युद्यानविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| ताम्रस्थाल्युपरि | = | तामाको थालीमाथि |
| सौवर्णीः | = | सुनको |
| ऋषिप्रतिमा | = | ऋषिको चित्र अङ्कित प्रतिमा |
| तत् पूजाविधिना | = | त्यो पूजाविधिले |
| पूजां निर्वर्त्य | = | पूजा समाप्त गरेर |
| वस्त्रालङ्कारः | = | अलङ्कारसहित वस्त्र |

## अभ्यासार्थाः प्रश्नाः

१. **हवनीयं द्रव्यं किम् ?**
२. **"सप्तऽऋषयः" इति मन्त्रं पूरयत ।**
३. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**
४. **प्रतिमायाः प्रार्थनामन्त्रं लिखत ।**
५. **गोदानप्रयोगं प्रदर्शयत ।**

### ऋषिपञ्चमी व्रतोद्यानको सामग्री

सामान्यव्रतप्रतिष्ठाको सम्पूर्ण सामग्री, ऋषिपञ्चमी पूजाविधिको सामग्री, अरुन्धतीसहित सप्तर्षिको सुनको प्रतिमा, कलश-७, थाली-७, धान-७ टपरी, हवनको सामग्री, शय्याको सामग्री र दक्षिणा इत्यादि ।

## (च) अनन्तपूजा

**अथ अनन्तपूजाविधिः**

**प्रातर्नद्यादिके स्नात्वा नित्यकर्म समाप्य च ।**
**अनन्तं हृदये कृत्वा शुचिस्तत्र समाहितः ॥**
**अव्रणं कलशं चैव वस्त्रयुग्मेन वेष्टितम् ।**
**मुष्टिमात्रेण दर्भैस्तु फणिराजं च कारयेत् ॥**
**स्थापयेत् कलशस्याग्रे जगदाधारमव्ययम् ।**
**आराधयेदनन्तं च तस्मिन् कुम्भे विशेषतः ॥**
**गोचर्ममात्रमालिप्य गोमयेन विचक्षणः ।**
**तन्मध्ये स्थण्डिलं कृत्वा पदमष्टदलं लिखेत् ॥**
**तस्योपरि न्यसेत् कुम्भं चूतपल्लवसंयुतम् ।**
**प्राणायामं ततः कृत्वा तीर्थादि परिकीर्तयेत् ॥**

सङ्कल्पः

अद्येहेत्यादि मम सकुटुम्बस्य क्षेमस्थैर्यायुरारोग्यचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमदनन्त देवता प्रीत्यर्थं यथा ज्ञानेन ध्यानावाहनादिषोडशोपचारैः श्रीमदनन्तपूजां करिष्ये ॥

आसनम्

**पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥**

कलशस्थापनम्

**सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।**
**आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**

कलशं वरुणं च सम्पूज्य । ततः शङ्खं घण्टां च सम्पूजयेत् ।

कुशत्रयसहितं कर्मपात्रोदकमादाय

**अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।**
**यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥**

इति पूजाद्रव्याणि आत्मानं च प्रोक्ष्य... गोत्र... अहं यमुनापूजनं करिष्ये ।

ध्यानम्

**लोकपालास्तु तां देवीमिन्द्रनीलसमुद्भवाम् ।**
**यमुने ! त्वामहं ध्याये सर्वकामार्थसिद्धये ॥**

आवाहनम्

**सरस्वति ! नमस्तुभ्यं सर्वकामप्रदायिनि !।**

**आगच्छ देवि ! यमुने ! व्रतसम्पूर्तिहेतवे ॥**

आसनम्

**सिंहासनसमारूढे ! देवशक्तिसमन्विते !।**

**सर्वलक्षणसम्पूर्णे ! यमुनायै नमोऽस्तु ते ॥**

पाद्यम्

**रुद्रपादे ! नमस्तुभ्यं सर्वलोकहितप्रिये !।**

**सर्वपापप्रशमनि तरङ्गिण्यै नमोऽस्तु ते ॥**

अर्घ्यम्

**तार्क्ष्यपादे नमस्तुभ्यं शङ्करप्रियभामिनि !।**

**सर्वकामप्रदे ! देवि ! यमुने ! ते नमो नमः ॥**

आचमनम्

**विष्णुपादोद्भवे देवि ! सर्वाभरणभूषिते ।**

**कृष्णामूर्ते ! महादेवि ! कृष्णावेण्यै नमो नमः ॥**

मधुपर्कम्

**सर्वपापहरे देवि ! विश्वप्रियप्रदर्शिनि ।**

**सौभाग्यं यमुने ! देहि यमुनायै नमोऽस्तु ते ॥**

पञ्चामृतम्

**नदीपादे ! महादेवि ! शङ्करार्धशरीरिणि !।**

**सर्वलोकहिते देवि ! भीमरथ्ये ! नमोऽस्तु ते ॥**

शुद्धोदकस्नानम्

**सिंहपादोत्तमे ! देवि नारसिंहसमप्रभे ।**

**सर्वलक्षणसम्पूर्णे भवनाशिनि ते नमः ॥**

श्वेतवस्त्रम्

**विष्णुपादाब्जसम्भूते गङ्गे ! त्रिपथगामिनि ।**

**सर्वपापहरे देवि भागीरथ्यै नमोऽस्तु ते ॥**

कञ्चुकीम्

**शङ्करस्य जटोद्भूते गौतमस्याघनाशिनि ।**

**सप्तधासागरं याति गोदावरि नमोऽस्तु ते ॥**

आभरणम्

**माणिक्यमुक्तावलिकौस्तुभैश्च गोमेदवैदूर्यसुपुष्परागैः ।**

**वज्रैश्च नीलैश्च सुशोभितानि गृहाण सर्वाभरणानि देवि ॥**

गन्धम्

**चन्दनागरुकस्तूरी रोचनं कुङ्कुमं तथा ।**

**कर्पूरेण समायुक्तं गन्धं दद्मि च भक्तितः ॥**

अक्षतान्

**श्वेतांश्च चन्द्रवर्णाभान् हरिद्रा-रागरञ्जितान् ।**

**अक्षतांश्च सुरश्रेष्ठ ! ददामि यमुने शुभे ॥**

पुष्पाणि

**मन्दारमालती जाती केतकी पाटलैः शुभैः ।**

**पूजायामि च देवेशि यमुने भक्तवत्सले ॥**

अङ्गपूजा

चञ्चलायै नमः पादौ पूजयामि । चपलायै नमः जानुनी पूजयामि ।

भक्तवत्सलायै नमः ऊरुः पूजयामि । हरायै नमः नाभिं पूजयामि ।

मन्मथवासिन्यै नमः गुह्यं पूजयामि । अज्ञानवासिन्यै नमः कटीं पूजयामि ।

भद्रायै नमः स्तनौ पूजयामि । अघहन्त्र्यै नमः भुजौ पूजयामि ।

रक्तकण्ठ्यै नमः कण्ठं पूजयामि । भवहन्त्र्यै नमः मुखं पूजयामि ।

गौर्यै नमः नेत्रे पूजयामि । भागीरथ्यै नमः ललाटं पूजयामि ।

यमुनायै नमः शिरः पूजयामि । सरस्वत्यै नमः सर्वाङ्गं पूजयामि ।

नामपूजा

यमुनायै नमः । सितायै नमः । कमलायै नमः । उत्पलायै नमः ।

अभीष्टप्रदायै नमः । धात्र्यै नमः । हरिहररूपिण्यै नमः । गायत्र्यै नमः ।

गरुडाय नमः । गिरिजायै नमः । चन्द्रचूडायै नमः । सर्वेश्वर्यै नमः । महालक्ष्म्यै नमः ।

**सर्वपापहरे देवि ! सर्वोपद्रवनाशिनि ।**

**सर्वसम्पत्प्रदे देवि ! यमुनायै नमोऽस्तु ते ॥**

धूपः

**दशाङ्गो गुग्गुलोद्भूतश्चन्दनागरुसंयुतः ।**

**कपिलाघृतसंयुक्तो धूपोऽयं प्रतिगृह्यताम् ॥**

दीपः

**घृतवर्तिसमायुक्तं वह्निना योजितं मया ।**

**गृहाण दीपकं देवि ! सर्वैश्वर्यप्रदायिनि ॥**

नैवेद्यम्

**शर्करामधुसंयुक्तं दधिक्षीराज्यसंयुतम् ।**

**पक्वमन्नं मया दतं नैवेद्यं प्रतिगृह्यताम् ॥**

हस्तप्रक्षालनम्

**पानीयं पावनं श्रेष्ठं गङ्गादिसरिदुद्भवम् ।**

**हस्तप्रक्षालनं देवि गृहाण मुखशोधनम् ॥**

मुखप्रक्षालनम्

**कर्पूरेण समायुक्तं यमुने ! चारुचन्दनम् ।**

**समर्पितं मया तुभ्यं करोद्वर्तनकं कुरु ॥**

करोद्वर्तनार्थे चन्दनम् । इंद फलमिति फलम् । पूगीफलमिति ताम्बूलम् । हिरण्यगर्भेति दक्षिणाम् ।

आरार्तिक्यम्

**त्रैलोक्यपावने ! गङ्गे ! अन्धकारविनाशिनि ।**

**पञ्चार्तिक्यं गृहाणेदं विश्वप्रीत्यै नमोऽस्तु ते ॥**

पुष्पाञ्जलिम्

**केतकीजातिकुसुमैर्मल्लिकामालतीभवैः ।**

**पुष्पाञ्जलिर्मयादत्तस्तव प्रीत्यै नमोऽस्तुते ॥**

प्रदक्षिणा

**अन्यथा शरणं नास्ति त्वमेव शरणं मम ।**

**तस्मात्कारुण्यभावेन संरक्ष परमेश्वरि ! ॥**

नमस्कारान्

**सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपङ्कजम् ।**

**परावरं पातु वरं सुमङ्गलं नमामि भक्त्या मम कामसिद्धये ॥**

**भवानि ! च महालक्ष्मि ! सर्वकामप्रदायिनि ।**

**व्रतं सम्पूर्णतां यातु यमुनायै नमोऽस्तु ते ॥**

यमुनाकलशोपरि पूर्णपात्रं निधाय तस्योपरि सप्तफणायुक्तं शेषं संस्थाप्य पूजयेत् ।

ध्यानम्

**ब्रह्माण्डाधारभूतं च यमुनान्तरवासिनम् ।**

**फणासप्तसमायुक्तं ध्यायेऽनन्तं हरिप्रियम् ॥**

आवाहनम्

**शेषं सप्तफणायुक्तं कालपन्नगनायकम् ।**

**अनन्तशयनार्थं त्वां भक्तचा ह्यावाहयाम्यहम् ॥**

आसनम्

**नवनागकुलाधीश शेषोद्धारक काश्यप ।**

**नानारत्नसमायुक्तमासनं प्रतिगृह्यताम् ॥**

पाद्यम्

**अनन्तप्रिय शेषेश जगदाधारविग्रह ! ।**

**पाद्यं गृहाण भत्या त्वं काद्रवेय ! नमोऽस्तु ते ॥**

अर्घ्यम्

**कश्यपानन्दजनक मुनिवन्दित भो प्रभो ! ।**

**अर्घ्यं गृहाण सर्वज्ञ सादरं शङ्करप्रिय ॥**

आचमनम्

**सहस्रफणिरूपेण वसुधोद्धारक प्रभो ! ।**

**गृहाणाचमनं देव पावनं च सुशीतलम् ॥**

मधुपर्कम्

**कुमाररूपिणे तुभ्यं दधिमध्वाज्यसंयुतम् ।**

**मधुपर्कं प्रदास्यामि सर्पराज नमोस्तु ते ॥**

पञ्चामृतम्

**पयो दधि घृतं चाथ मधु वै शर्करा तथा ।**

**पञ्चामृतं गृहाण त्वं प्रसीद परमेश्वर ॥**

स्नानम्

**गङ्गादिपुण्यतीर्थैस्त्वामभिषिञ्चेयमादरात् ।**

**बलभद्रावतारेश ! नन्दज श्रीपतेः सखे ॥**

वस्त्रम्

**कौशेययुग्मं देवेश ! प्रीत्या तव मयाऽऽर्पितम् ।**

**गृहाण पन्नगाधीश तार्क्ष्यशत्रो नमोऽस्तु ते ॥**

यज्ञोपवीतम्

**सुवर्णनिर्मितं सूत्रं ग्रथितं कण्ठहारकम् ।**

**अनेकरत्नैः रचितं सर्पराज नमोऽस्तु ते ॥**

सर्वाभरणम्

**अनेकरत्नान्वितहेमकुण्डले माणिक्यसङ्काशितकङ्कणद्वयम् ।**

**हेमाङ्गुलीयं कृतरत्नमुद्रिकं हैमं किरीटं फणिराजमर्पितम् ॥**

चन्दनम्

**श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥**

अक्षताः

**अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ।**

**मया निवेदिता भक्त्या गृहाण परमेश्वर ॥**

पुष्पाणि

**करवीरैर्जातिपुष्पैश्चंपकैर्बकुलैः शुभैः ।**

**तव पूजां करोम्यत्र विष्णुप्रिय नमोऽस्तु ते ॥**

अङ्गपूजा

ॐ सहस्रपादाय नमः पादौ पूजयामि । गूढगुल्फाय नमः गुल्फौ पूजयामि । हेमजङ्घाय नमः जङ्घे पूजयामि । मन्दगतये नमः जानुनी पूजयामि । पीताम्बराय नमः कटिं पूजयामि । गम्भीरनाभाय नमः नाभिं पूजयामि । पवनाशनाय नमः उदरं पूजयामि । उरगाय नमः हस्तौ पूजयामि । कालिकाय नमः भुजौ पूजयामि । कम्बुकण्ठाय नमः कण्ठं पूजयामि । विषवक्त्राय नमः वक्त्रं पूजयामि । अनन्तप्रियाय नमः सर्वाङ्गं पूजयामि ।

धूपः

**वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

दीपः

**आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥**

नैवेद्यम्

**नानापक्वान्नसंयुक्तं सुस्वादु मधुरं मधु ।**

**नैवेद्यं गृहचतां देव भक्तिं मे ह्यचलां कुरु ॥**

मध्ये पानीयम् । उत्तरापोशनम् । हस्तप्रक्षालनम् । मुखप्रक्षालनम् । करोद्वर्तनार्थे चन्दनम् । पूगीफलम् । ताम्बूलम् । फलम्– इदं फलम्... । दक्षिणा– हिरण्यगर्भेति... ।

मन्त्रपुष्पम्

**नानाकुसुमसंयुक्तं पुष्पाञ्जलिमिमं प्रभो ! ।**

**कश्यपानन्दजनक सर्पेश ! प्रतिगृह्यताम् ॥**

प्रदक्षिणा

**यानिकानि च पापानि जन्मान्तर कृतानि च ।**

**तानि तानि प्रणश्यन्तु प्रदक्षिण पदेपदे ॥**

नमस्कारान्

**नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥**

प्रार्थना

**अनन्तकल्पोक्तफलं देहि मे त्वमहीश्वर ! ।**

**त्वत्पूजारहितश्चार्द्धफलं प्राप्नोति मानव ॥**

द्वारपूजा

प्राग्द्वारे

द्वारश्रियै नमः । नन्दायै नमः । सुनन्दायै नमः । धात्र्यै नमः । विधात्र्यै नमः । चिच्छक्तयै नमः । शङ्खनिधये नमः । पद्मनिधये नमः ।

दक्षिणद्वारे

द्वारश्रियै नमः । चण्डायै नमः । प्रचण्डायै नमः । धात्र्यै नमः । विधात्र्यै नमः । चिच्छक्तयै नमः । मायाशक्तयै नमः । शङ्खनिधये नमः । पद्मनिधये नमः ।

पश्चिमद्वारे

द्वारश्रियै नमः । बलायै नमः । धात्र्यै नमः । विधात्र्यै नमः । चिच्छक्तयै नमः । मायाशक्तयै नमः । शङ्खनिधये नमः । पद्मनिधये नमः ।

उत्तरद्वारे

द्वारश्रियै नमः। महाबलायै नमः। प्रबलायै नमः। धात्र्यै नमः। विधात्र्यै नमः।

चिच्छक्त्यै नमः। मायाशक्त्यै नमः। शङ्खनिधये नमः। पद्मनिधये नमः।

पीठपूजा

मध्ये वास्तुपुरुषाय नमः। मण्डूकाय नमः। कालाग्निरुद्राय नमः।

आधारशक्त्यै नमः। कूर्मायै नमः। पृथिव्यै नमः। अमृतार्णवाय नमः।

श्वेतद्वीपाय नमः। कल्पवृक्षेभ्यो नमः। मणिमन्दिराय नमः। हेमपीठाय नमः।

धर्माय नमः। अधर्माय नमः। ज्ञानाय नमः। वैराग्याय नमः। ऐश्वर्याय नमः।

अनैश्वर्याय नमः। सहस्रफणान्वितायानन्ताय नमः। सर्वसत्त्वाय नमः।

पद्माय नमः। आनन्दकन्दाय नमः। संविन्नालाय नमः। वह्निमण्डलाय नमः।

सं सत्वाय नमः। रं रजसे नमः। तं तमसे नमः। आत्मने नमः।

परमात्मने नमः। अन्तरात्मने नमः। ज्ञानात्मने नमः। प्राणात्मने नमः।

कालात्मने नमः॥

पूर्वादिदिक्षु

जयायै नमः। विजयायै नमः। अजितायै नमः। अपराजितायै नमः।

नित्यायै नमः। विनाशिन्यै नमः। दोग्ध्र्यै नमः। अघोरायै नमः।

मङ्गलायै नमः। आधारशक्तिकमलासनाय नमः।

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋक्सामाथर्वाणिच्छन्दांसि परा प्राणशक्तिर्देवता आं बीजम्। ह्रीं शक्तिः क्रौं कीलकम्। श्रीमदनन्तस्य प्राणप्रतिष्ठापने विनियोगः॥

ॐ आँ ह्रीं क्रौं अं यं रं लं वं शं षं सं हं क्षं अः क्रौं ह्रीं आं अनन्तस्य प्राणा इह प्राणाः॥

ॐ आं ह्रीं क्रौं... अनन्तस्य जीव इह स्थितः॥ ॐ आं ह्रीं क्रौं... अनन्तस्य सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहागत्य सुखं चिरं तिष्ठन्तु स्वाहा॥

**ॐ असुनी ते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्**॥

**ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृडया नः स्वस्ति**॥

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः**।

**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति**।

गर्भाधानादि संस्कारसिद्ध्यर्थं पञ्चदशप्रणवावृत्तिः करिष्ये॥

**ॐ रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः**।

**पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान्**॥

**बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या ।**

**देवीबालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥**

अनन्तपूजा ध्यानम्

**ततस्तु मूलमन्त्रेण नमस्कृत्य जनार्दनम् ।**

**नवाम्रपल्लवाभासं पिङ्गलश्मश्रुलोचनम् ॥**

**पीताम्बरधरं देवं शङ्खचक्रगदाधरम् ।**

**अलङ्कृतं समुद्रस्थं विश्वरूपं विचिन्तये ॥**

आवाहनम्[९]

**आगच्छानन्त देवेश तेजोराशे जगत्पते ! ।**

**इमां मया कृतां पूजां गृहाण पुरुषोत्तम ॥**

आसनम्

**नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ।**

**आसनं देवदेवेश ! गृहाण पुरुषोत्तम ॥**

पाद्यम्

**गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् ।**

**तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥**

अर्घ्यम्

**अनन्तानन्तदेवेश ! अनन्तफलदायक ।**

**अनन्तानन्तरूपोऽसि गृहाणार्घ्यं नमोऽस्तु ते ॥**

आचमनम्

**गङ्गोदकं समानीतं सुवर्णकलशे स्थितम् ।**

**आचम्यतां हृषीकेश ! प्रसीद पुरुषोत्तम ॥**

स्नानम्

**अनन्तगुणरूपाय विश्वरूपधराय च ।**

**नमो महात्मदेवाय अनन्ताय नमो नमः ॥**

---

९ • **सहस्रशीर्षेत्यादि** वैदिक मन्त्रैश्च यथाक्रमं पूजयेत् ।

पञ्चामृतम्

तत्र पयः

**सुरभेस्तु समुत्पन्नं देवानामपि दुर्लभम् ।**

**पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् ॥**

दधि

**चन्द्रमण्डलसङ्काशं सर्वदेवप्रियं हि तत् ।**

**ददामि दधि देवेश स्नानार्थं प्रतिगृह्यताम् ॥**

घृतम्

**आज्यं सुराणामाहारम् आज्ये लोकाः प्रतिष्ठिताः ।**

**आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम् ॥**

मधु

**सर्वौषधिसमुत्पन्नं पीयूषसदृशं मधु ।**

**स्नानाय ते मया दत्तं गृहाण परमेश्वर ॥**

शर्करा

**इक्षुसारसमुद्भूतां शर्करां मधुरां शुभाम् ।**

**स्नानाय ते मया दत्तं गृहाण परमेश्वर**[१०*] ॥

वस्त्रम्

**तप्तकाञ्चनवर्णाभं कौशेयं च सुनिर्मितम् ।**

**वस्त्रं गृहाण देवेश ! लक्ष्मीयुक्त ! नमोऽस्तु ते ॥**

यज्ञोपवीतम्

**दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् ।**

**ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥**

ग्रन्थिपूजा

श्रियै नमः । मोहिन्यै नमः । पद्मिन्यै नमः । महाबलायै नमः । अजायै नमः ।

मङ्गलायै नमः । वरदायै नमः । शुभायै नमः । जयायै नमः । विजयायै नमः ।

जयन्त्यै नमः । पापनाशिन्यै नमः । विश्वरूपायै नमः । सर्वमङ्गलायै नमः ॥ १४ ॥

---

१० * नाममन्त्रैः पूर्वपूजां कुर्यात् । पुरुषसूक्तेनाभिषेकः ।

अङ्गपूजा

मत्स्याय नमः पादौ पूजयामि । कूर्माय नमः गुल्फौ पूजयामि ।
वराहाय नमः जानुनी पूजयामि ॥ नारसिंहाय नमः ऊरुः पूजयामि ।
वामनाय नमः कटिं पूजयामि । रामाय नमः उदरं पूजयामि ।
श्रीरामाय नमः हृदयं पूजयामि । कृष्णाय नमः मुखं पूजयामि ।
सहस्रशिरसे नमः शिरः पूजयामि । श्रीमदनन्ताय नमः सर्वाङ्गं पूजयामि ।

प्रथमावरणपूजा

अनन्तस्य दक्षिणपार्श्वे रमायै नमः । वामपार्श्वे भूम्यै नमः ।
आवरणदेवतामावाह्य हस्तौ प्रक्षाल्य गन्धं पुष्पं तर्जनीमध्यमाङ्गुष्ठैर्धृत्वा
मध्ये शङ्खोदकं गृहीत्वा मन्त्रान्ते शङ्खोदकं भूमौ निक्षिप्य पुष्पं देवोपरि निक्षिपेत् ॥

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**
**भक्तचा समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ १ ॥**

द्वितीयावरणार्चनम्

पूर्वादिक्रमेण वृद्धोल्काय नमः । महोल्काय नमः । शतोल्काय नमः । सहस्रोल्काय नमः ॥

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**
**भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥ २ ॥**

तृतीयावरणार्चनम्

वासुदेवाय नमः । सङ्कर्षणाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**
**भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥ ३ ॥**

चतुर्थावरणार्चनम्

प्राच्यां केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः ।
मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः ।
हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**
**भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥ ४ ॥**

पञ्चमावरणार्चनम्

पूर्वादिक्रमेण मत्स्याय नमः । कूर्माय नमः । नारसिंहाय नमः ।
वामनाय नमः । परशुरामाय नमः । श्रीरामाय नमः । कृष्णाय नमः ।
बौद्धाय नमः । कल्कये नमः । अनन्ताय नमः । विश्वरूपिणे नमः ॥

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥ ५ ॥**

षष्ठावरणार्चनम्

पूर्वे अनन्ताय नमः । दक्षिणे ब्रह्मणे नमः । पश्चिमे वायवे नमः ।

उत्तरे ईशानाय नमः । आग्नेयां वारुण्यै नमः । नैर्ऋत्यां गायत्र्यै नमः ।

वायव्यां भारत्यै नमः । ऐशान्यां गिरिजायै नमः । अग्रे गरुडाय नमः ।

वामे सुपुण्याय नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम् ॥ ६ ॥**

सप्तमावरणार्चनम्

पूर्वादिक्रमेण इन्द्राय नमः । अग्नये नमः । यमाय नमः । निर्ऋतये नमः ।

वरुणाय नमः । वायवे नमः । सोमाय नमः । ईशानाय नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥ ७ ॥**

अष्टमावरणार्चनम्

आग्नेयां शेषाय नमः । नैर्ऋत्यां विष्णवे नमः । वायव्यां विधये नमः ।

ऐशान्यां प्रजापतये नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ॥ ८ ॥**

नवमावरणार्चनम्

आग्नेयां गणपतये नमः । नैर्ऋत्यां सप्तमातृभ्यो नमः । वायव्यां दुर्गायै नमः ।

ऐशान्यां क्षेत्राधिपतये नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ॥ ९ ॥**

दशमावरणार्चनम्

मध्ये ब्रह्मणे नमः । भास्कराय नमः । शेषाय नमः । सर्वव्यापिने नमः ।

ईश्वराय नमः । विश्वरूपाय नमः । महाकायाय नमः । सृष्टिकर्त्रे नमः ।

कृष्णाय नमः । हरये नमः । शिवाय नमः । स्थितिकारकाय नमः । अन्तकाय नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं दशमावरणार्चनम् ॥ १० ॥**

एकादशावरणार्चनम्

शौरये नमः । वैकुण्ठाय नमः । महाबलाय नमः । पुरुषोत्तमाय नमः ।

अजाय नमः । पद्मनाभाय नमः । मङ्गलाय नमः । हृषीकेशाय नमः ।

वरदाय नमः । मधुसूदनाय नमः । अच्युताय नमः । अनन्ताय नमः ।

गोविन्दाय नमः । विजयाय नमः । अपराजिताय नमः । कृष्णाय नमः ॥

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं एकादशावरणार्चनम् ॥ ११ ॥**

द्वादशावरणार्चनम्

अनन्ताय नमः । कपिलाय नमः । शेषाय नमः । सङ्कर्षणाय नमः । हलायुधाय नमः ।

तारणाय नमः । शीरपाणये नमः । बलभद्राय नमः ।

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं द्वादशावरणार्चनम् ॥ १२ ॥**

त्रयोदशावरणार्चनम्

क्षीराब्धिशायिने नमः । अच्युताय नमः । भूम्याधाराय नमः । लोकनाथाय नमः ।

फणामणिविभूषणाय नमः । सहस्रमूर्ध्ने नमः । सहस्रार्चिषे नमः ॥

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं त्रयोदशावरणार्चनम् ॥ १३ ॥**

चतुर्दशावरणार्चनम्

केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः ।

मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः ।

हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः । आदि चतुर्विंशतिनामभिः ॥

**दयाब्धे ! त्राहि संसारसर्पान् मां शरणागतम् ।**

**भक्त्या समर्पये तुभ्यं चतुर्दशावरणार्चनम् ॥ १४ ॥**

**पत्रपूजा**

कृष्णाय नमः पलाशपत्रं समर्पयामि । विष्णवे नमः औदुम्बरपत्रं समर्पयामि ।

हरये नमः अश्वत्थपत्रं समर्पयामि । शम्भवे नमः भृङ्गराजपत्रं समर्पयामि ।

ब्रह्मणे नमः जटाधारपत्रं समर्पयामि । ईश्वराय नमः आम्रपत्रं समर्पयामि ।

विश्वरूपिणे नमः कदलीपत्रं समर्पयामि । महाकालाय नमः अपामार्गपत्रं समर्पयामि । सृष्टिकर्त्रे नमः करवीरपत्रं समर्पयामि । स्थितिकर्त्रे नमः पुन्नागपत्रं समर्पयामि ।

अन्तकाय नमः नागवल्लीपत्रं समर्पयामि ॥

**पुष्पपूजा**

अनन्ताय नमः पद्मपुष्पं समर्पयामि । विष्णवे नमः जातीपुष्पं समर्पयामि ।

अव्ययाय नमः कह्लारपुष्पं समर्पयामि । सहस्रजिते नमः केतकीपुष्पं समर्पयामि । अनन्तरूपिणे नमः बकुलपुष्पं समर्पयामि । इष्टाय नमः शतपुष्पं समर्पयामि ।

विशिष्टाय नमः पुन्नागपुष्पं समर्पयामि । शिष्टेष्टाय नमः करवीरपुष्पं समर्पयामि ।

महीधराय नमः मालतीपुष्पं समर्पयामि । अच्युताय नमः कर्णिकारपुष्पं समर्पयामि । अन्तकाय नमः कदलीपुष्पं समर्पयामि ।

अष्टोत्तरशतनामभिः पूजयेत्

ॐ अनन्ताय नमः । अच्युताय नमः । अद्भुतकर्मणे नमः । अमितविक्रमाय नमः । अपराजिताय नमः । अखण्डाय नमः । अग्निनेत्राय नमः । अग्निवपुषे नमः । अदृश्याय नमः । अत्रिपुत्राय नमः ॥ १० ॥ अनन्तकुलाय नमः अनिशिने नमः । अनघाय नमः । अब्दनीलाय नमः । अहरहाय नमः । अष्टमूर्तये नमः । अनिरुद्धाय नमः । अनिविष्टाय नमः । अचञ्चलाय नमः । शब्दातिगाय नमः ॥ २० ॥ अचलरूपाय नमः ॥ अखिलधराय नमः । अव्यक्ताय नमः । अनुरूपाय नमः । अभयङ्कराय नमः । अक्षताय नमः । अवपुषे नमः । अयोनिजाय नमः । अरविन्दाय नमः । अशनवर्जिताय नमः ॥ ३० ॥ अधोक्षजाय नमः । अदितिपुत्राय नमः । अम्बिकापतिपूर्वजाय नमः । अपस्मारनाशिने नमः । अव्ययाय नमः । अनादये नमः ।

अप्रमेयाय नमः । अघशत्रवे नमः । अमरारिघ्नाय नमः । अनीश्वराय नमः ॥ ४० ॥

अजाय नमः । अघोराय नमः । अनादिनिधनाय नमः । अमरप्रभवे नमः । अग्राह्याय नमः । अक्रूराय नमः । अनुत्तमाय नमः । अरूपाय नमः । अर्ह्ने नमः । अमोघाधिपतये नमः ॥ ५० ॥ अजाय नमः । अक्षयाय नमः । अमृताय नमः । अघोरवीर्याय नमः । अव्यङ्गाय नमः ।

अविघ्नाय नमः । अतीन्द्रियाय नमः । अमिततेजसे नमः । अमितये नमः ।

अष्टमूर्तये नमः ॥ ६० ॥ अनिलाय नमः । अवशाय नमः । अणोरणीयसे नमः । अशोकाय नमः । अरविन्दाक्षाय नमः । अधिष्ठाय नमः । अमितनयनाय नमः । अरण्यवासिने नमः । अप्रमत्ताय नमः । अनन्तरूपाय नमः ॥ ७० ॥ अनलाय नमः । अनिमिषाय नमः ।

अस्त्ररूपाय नमः । अग्रगण्याय नमः । अप्रमिताय नमः । अनन्तकाय नमः । अचिन्त्याय नमः । अपांनिधये नमः । अतिसुन्दराय नमः । अमरप्रियाय नमः ॥ ८० ॥ अष्टसिद्धिप्रदाय नमः । अरविन्दप्रियाय नमः । अरविन्दोद्भवाय नमः । अनयाय नमः । अर्थाय नमः । अक्षोभ्याय नमः ।

अर्चिष्मते नमः । अनेकमूर्तये नमः । अनन्तब्रह्माण्डपतये नमः । अनन्तशयनाय नमः ॥ ९० ॥ अमराधिपतये नमः । अनाधाराय नमः । अनन्तनाम्ने नमः । अनन्तश्रिये नमः । अक्षराय नमः । अमायाय

नमः । आश्रमस्थानाय नमः । आश्रमातीताय नमः । अन्नदाय नमः ।

आत्मयोनये नमः ॥१०० ॥ अवनीपतये नमः । अवनीधराय नमः । अनादये नमः । आदित्याय नमः । अमृताय नमः । अपवर्गप्रदाय नमः । अव्यक्ताय नमः । अनन्ताय नमः ॥ १०८ ॥

धूपः

**दशाङ्गङ्गुग्गुलोद्भूतं चन्दनागुरुसंयुतम् ।**

**सर्वेषामुत्तमं धूपं गृहाण सुरपूजित ॥**

दीपः

**आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।**

**दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥**

नैवेद्यम्

**अन्नं चतुर्विधं स्वादु पयोदधिघृतैर्युतम् ।**

**नानाव्यञ्जनशोभाढ्यं नैवेद्यं प्रतिगृह्यताम् ॥**

उत्तरापोशनम्

**उत्तरापोशनार्थं ते दद्मि तोयं सुवासितम् ।**

**गृहाण सुमुखो भूत्वा अनन्ताय नमो नमः ॥**

करोद्वर्तनम्

**करोद्वर्तनकं देव मया दत्तं हि भक्तितः ।**

**चारुचन्द्रप्रभं दिव्यं गृहाण जगदीश्वर ॥**

नारिकेलफलम्

**इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ताम्बूलम्

**पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।**

**कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

दक्षिणा

**हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**दक्षिणा काञ्चनी देव स्थापिता मे तवाग्रतः ॥**

प्रदक्षिणा

**यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि तानि विनश्यन्ति प्रदक्षिणपदेपदे ॥**

नमस्कारः

**नमस्ते भगवन् भूयो नमस्ते धरणीधर ।**

**नमस्ते सर्वनागेन्द्र नमस्ते मधुसूदन ॥**

मन्त्रपुष्पम्

**नमस्ते देवदेवेश नमस्ते गरुडध्वज ।**

**नमस्ते कमलाकान्त अनन्ताय नमो नमः ॥**

दोरकप्रार्थना

**अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः ।**

**नमोऽस्तु पद्मनाभाय नागानां पतये नमः ।**

**अनन्तकामदः कामाननन्तो मे प्रयच्छतु ।**

**अनन्तो दोररूपेण पुत्र-पौत्रान् प्रवर्धतु ॥**

दोरकबन्धनम्

**अनन्तसंसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव ।**

**अनन्तरूपे विनियोजयस्व ह्यनन्तसूत्राय नमो नमस्ते ॥**

जीर्णदोरकविसर्जनम्

**नमः सर्वहितानन्त जगदानन्दकारक ।**

**जीर्णदोरममुं देव विसृजेऽहं तवाज्ञया ॥**

वायनम्

**गृहाणेदं द्विजश्रेष्ठ वायनं दक्षिणायुतम् ।**

**त्वत्प्रसादादहं देव मुच्येयं कर्मबन्धनात् ॥**

**प्रतिगृह्णन् द्विजश्रेष्ठ अनन्तफलदायक ।**

**पक्वान्नफलसंयुक्तं दक्षिणां घृतसंयुतम् ॥**

**वायनं द्विजवर्याय दास्यामि व्रतपूर्तये ॥**

जीर्णदोरकदानम्

**अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च ।**

**अनन्तस्तारकोभाभ्यामनन्ताय नमो नमः ॥**

ततो यथाशक्ति ब्राह्मणान् भोजयेत् । अनेन कृतपूजनेन श्रीमदनन्तः प्रीयतां नमः ॥

*॥ इति अनन्तपूजाविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| स्नात्वा | = | नुहाएर |
| मुष्टिमात्रेण | = | एक मुठीको |
| पूजाद्रव्याणि | = | पूजाका सामाग्रीहरू |
| प्रथमावरणम् | = | पहिलो घेरा |
| दोरकबन्धनम् | = | अनन्तडोरो बाँध्नु |
| जीर्ण | = | पुरानो |

## अभ्यासार्थाः प्रश्नाः

१. **अनन्तपूजायाः प्रतिज्ञासङ्कल्पवाक्यं लिखत ।**

२ **अनन्तपूजायाः प्राणप्रतिष्ठामन्त्रं लिखत ।**

३. **अनन्तपूजायाः द्वितीयावरणार्चनप्रयोगं प्रदर्शयत ।**

४. **दोरकबन्धनमन्त्रं लिखत ।**

५. **जीर्णदोरकत्यागमन्त्रं लिखत ।**

## अनन्तपूजाको सामग्री

पूजाको सामान भाग १, सौभाग्य, पञ्चगव्य, पञ्चामृत, पञ्चपल्लव, पञ्चरत्न, सर्वौषधी, जनै, प्रतिमा, फूलमाला (विविध फूलहरू), धूप, वत्ती नैवेद्य, अनन्त डोरो, दक्षिणा आदि ।

### (छ) अनन्तचतुर्दशीव्रतोद्यापनविधिः

**अथ अनन्तचतुर्दशीव्रतोद्यापनविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च, तदुपरि ताम्रस्थालीं निधाय ताम्रस्थाल्युपरि ग्रन्थिवत्सुवर्णानन्तदोरकं सलक्ष्मीकं चतुर्भुजं वासुदेवप्रतिमां तत्पूजाविधिना (अनन्तचतुर्दशीपूजाविधिना) सम्पूज्य रात्रौ जागरणं प्रातर्देवस्योत्तरपूजां विधाय ॥

दधिमध्वाज्यदुग्धाक्ततिलैर्वा पायसेनाश्वत्थशमीपल्लवैश्च

**अतोदेवाऽअवन्तु नो यतो विष्णुर्विचक्रमे ।**

**पृथिव्याः सप्तधामभि** ॥ ऋक्. १।२।७

मन्त्रेण प्रत्येकं १०८ होमं कृत्वा प्रार्थयेत् ।

**अनन्तकामान् मे देहि सर्वकामफलप्रद ।**

**अनन्ताय नमस्तुभ्यं पुत्रपौत्रायुवर्धन** ॥

**अनन्तः सर्वकामानामधिपः सर्वकामदः ।**

**व्रतेनानेन सुप्रीतो भव त्वं हि सदा मम ॥**

चतुर्दशब्राह्मणेभ्यः पक्वान्नपूरितवस्त्रोपवीतसहित चतुर्दशकुम्भदानम् । सति सम्भवे शय्यां दत्वा पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि अमुकशर्माहं मम क्षेमस्थैर्यायुरारोग्य-चतुर्विधपुरुषार्थसिद्धिपूर्वकानन्तप्रीतये कृतस्यानन्तचतुर्दशीव्रतस्य यथोक्तफलावाप्तये उद्यापनाङ्गत्वेन सुपूजितां सौवर्णीं सोपस्करां अनन्तप्रतिमां अनन्तदेवताकां यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**अनन्त देवदेवेश ! सर्वलोकवरप्रद ।**

**तव मूर्तिप्रदानेन व्रतं सम्पूर्णमस्तु मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत् संपूजितस्वर्णनिर्मितानन्तप्रतिमादानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोदानम्

अद्येत्यादि अमुकगोत्रोऽमुकशर्माहं मम कृतस्यानन्तचतुर्दशीव्रतस्योद्यापनकर्मणः साङ्गतासिद्धये न्यूनातिरिक्तपरिपूर्णार्थमिमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतं द्रव्यम् अमुकदैवतं यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा अद्यकृतैतदित्यादि ॥

*॥ इति अनन्तचतुर्दश्युद्यापनम् ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| ग्रन्थिवत् | = | गाँठो जस्तै |
| सुवर्णः | = | सुन |
| अनन्तदोरकम् | = | अनन्तको डोरी (धागो) |
| सलक्ष्मी | = | लक्ष्मीले सहित भएको |
| वासुदेवम् | = | विष्णुको |

| | | |
|---|---|---|
| दधि | = | दही |
| मधु | = | मह |
| आज्यम् | = | घिउ |
| दुग्धम् | = | दुध |
| पक्वान्नपूरितम् | = | पक्वान्नले युक्त भएको |

## अभ्यासार्थाः प्रश्नाः

**१. अनन्तव्रतोद्यापने विशेषकार्याणि कानि ? लिखत ।**

**२. प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

**३. प्रतिमायाः प्रार्थनामन्त्रं लिखत ।**

**४. अनन्तव्रतोद्यापने गोदानप्रयोगं प्रदर्शयत ।**

## अनन्तव्रतोद्यापनको सामग्री

सामान्य व्रतप्रतिष्ठाको सामग्री, अनन्त पूजाविधिको सामग्री, रामसहित अनन्तको सुनको प्रतिमा, अन्न, जल र वस्त्रसहित गाग्रो, कलश-१४, जनै-१४ जोर, पिपलका समिधा, हवनको सामग्री, गोदानको सामग्री, काँचो धागो, रोटी, शय्याको सामान र दक्षिणा इत्यादि ।

## (ज) पौषरविवासरव्रतपूजा

**अथ पौषरविवासरस्य व्रतपूजाविधिः**

श्रीसूर्याय नमः । आचम्य कर्मपात्रं कृत्वा सङ्कल्पः

ॐ अद्येत्यादि मम समस्तरोगनिवारणार्थमायुष्यादिसकलकामनासिद्ध्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं रविपूजनं तदङ्गत्वेन च दीप-कलश-गणेश पूजनमहं करिष्ये ।

दीप-कलश-गणेशपूजनम् । ताम्रपात्रे रक्तचन्दनेन अष्टदलं लिखित्वा देवं पूजयेत् ।

ध्यानम्

**तेजोरूप सहस्रांशु सप्ताश्वरथगं वरम् ।**
**द्विभुजं वरदं पद्मलाञ्छनं सर्वकामदम् ॥**

आवाहनम्

**आगच्छ भगवन् सूर्य मण्डले च स्थिरो भव ।**
**यावत् पूजां समाप्येत तावत् त्वं सन्निधौ भव ॥**

आसनम्

**हेमासनं महद्दिव्यं नानारत्नविभूषितम् ।**
**दत्तं मे गृह्यतां देव ! दिवाकर नमोऽस्तु ते ॥**

पाद्यम्

**गङ्गाजलं मयानीतं परमं पावनं महत् ।**

**पाद्यं गृहाण देवेश ! धामरूप नमोऽस्तु ते ॥**

अर्घ्यम्

**भो भो सूर्य महद्भूत ब्रह्मविष्णुस्वरूपिणे ।**

**अर्घ्यमञ्जलिना दत्तं गृहाण परमेश्वर ! ॥**

आचमनीयम्

**गङ्गादितीर्थजं तोयं जातिपुष्पेण वासितम् ।**

**ताम्रपात्रे स्थितं दिव्यं गृहाणाचमनीयकम् ॥**

स्नानम्

**जाह्नवीजलमत्यन्तं पवित्रकरणं परम् ।**

**स्नानार्थं च मया नीतं स्नानं कुरु जगत्पते ॥**

पञ्चामृतम्

**पयोदधिघृतं चैव शर्करा मधुसंयुतम् ।**

**कृतं मया च स्नपनं प्रीयतां परमेश्वर ॥**

स्नानम्

**गङ्गा-गोदावरी चैव यमुना च सरस्वती ।**

**नर्मदासिन्धुकाबेर्यस्ताभ्यः स्नानार्थमाहृतम् ॥**

वस्त्रम्

**वस्त्रपट्टयुगं देव ! सूक्ष्मतन्तुविनिर्मितम् ।**

**शुद्धं चैव मया दत्तं गृहाण कमलाकर ! ॥**

उपवीतम्

**नमः कमलहस्ताय विश्वरूपाय ते नमः ।**

**उपवीतं मया दत्तं तद्गृहाण दिवाकर ! ॥**

चन्दनम्

**कुङ्कुमागरुकस्तूरीसुगन्धैश्चन्दनादिभिः ।**

**रक्तचन्दनयुक्तं तु गन्धमेतत् प्रगृह्यताम् ॥**

पुष्पम्

**जपा-कदम्ब-कुसुम-रक्तोत्पलयुतानि च ।**

**पुष्पाणि गृह्यतां देव ! सर्वकामप्रदो भव ॥**

अक्षताः

**रक्तचन्दनसंमिश्रा अक्षताश्च सुशोभनाः ।**

**मया दत्ता गृहाण त्वं वरदो भव भास्कर ! ॥**

अङ्गपूजा

ॐ मित्राय नमः पादौ पूजयामि । रवये नमः जङ्घे पूजयामि । सूर्याय नमः जानुनी पूजयामि । खगाय नमः ऊरुः पूजयामि । पूष्णे नमः गुह्यं पूजयामि । हिरण्यगर्भाय नमः

कटिं पूजयामि । मरीचये नमः नाभिं पूजयामि । आदित्याय नमः जठरं पूजयामि ।

सवित्रे नमः हृदयं पूजयामि । अर्काय नमः स्तनौ पूजयामि । भास्कराय नमः

कण्ठं पूजयामि । अर्यम्णे नमः स्कन्धौ पूजयामि । भास्कराय नमः हस्तौ पूजयामि । अहस्कराय नमः मुखं पूजयामि । व्रध्नाय नमः नासिकां पूजयामि । जगदेकचक्षुषे नमः

नेत्रे पूजयामि । सवित्रे नमः कर्णौ पूजयामि । त्रिगुणात्मधारिणे नमः ललाटं पूजयामि । विरिञ्चिनारायणशङ्करात्मने नमः शिरः पूजयामि । तिमिरनाशिने नमः सर्वाङ्गं पूजयामि ।

धूपः

**त्रिदशागुग्गुलोद्भूतः कालागरुसमन्वितः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

दीपः

**कार्पासवर्तिकायुक्तं गोघृतेन समन्वितम् ।**

**दीपं गृहाण देवेश ! त्रैलोक्यतिमिरापहम् ॥**

नैवेद्यम्

**पायसं घृतसंयुक्तं नानापक्वान्नसंयुतम् ।**

**नैवेद्यं च मया दत्तं शान्तिं कुरु जगत्पते ! ॥**

जलम्

**कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।**

**आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥**

करोद्वर्तनम्

**मलयाचलसम्भूतं कर्पूरेण समन्वितम् ।**

**करोद्वर्तनकं चारु गृह्यतां च जगत्पते ! ॥**

फलम्

**इदं फलं मया देव ! स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

ताम्बूलम्

**एलालवङ्गकर्पूरैः खादिरैश्च सपूगकैः ।**

**नागवल्लीदलैर्युक्तं ताम्बूलं प्रतिगृह्यताम् ॥**

दक्षिणा

**दक्षिणां काञ्चनीं देव स्थापितांश्च तवाग्रतः ।**

**गृहाण सुमुखो भूत्वा प्रभाकर नमोऽस्तु ते ॥**

नीराजनम्

**पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकम् ।**

**नीराजनं गृहाणेदं सर्वसौख्यकरो भव ॥**

प्रदक्षिणा

**यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**विलयं यान्ति तानीह प्रदक्षिणपदे पदे ॥**

नमस्कारम्

**नमः पङ्कजनाभाय नमः पङ्कजधारिणे ।**

**नमः पङ्कजनेत्राय भास्कराय नमो नमः ॥**

वायनम्

**तण्डुलैः पूरितं पात्रं हिरण्येन समन्वितम् ।**

**रक्तवस्त्रयुगं चैव वायनं ते ददाम्यहम् ॥**

प्रार्थना

**यस्योदयः स्याज्जगतः प्रबोद्धा यः कर्मसाक्षी भुवनस्य गोप्ता ॥**

**कुष्ठादिकव्याधिविनाशको यः स भास्करो मे दुरितं निहन्यात् ॥**

ततो ब्रह्मणान् भक्ष्य-भोज्य-दक्षिणादिभिः सन्तोष्य विसर्जयेत् ॥

इति पौषमासादित्यवारपूजा समाप्ता ।

## शब्दार्थाः

| | | |
|---|---|---|
| कृत्वा | = | गरेर |
| रक्तचन्दनेन | = | रक्तचन्दनले |
| उपवीतम् | = | जनै |
| वायनम् | = | सीधा |

## अभ्यासार्थाः प्रश्नाः

१. **पौषरविवासरव्रतस्य प्रतिज्ञासङ्कल्पं लिखत ।**

२. **सूर्यस्य ध्यानमन्त्रं लिखत ।**

३. **सूर्यस्य अङ्गपूजां कथं क्रियते ।**

४. **"यानि कानि च पापानि " इति मन्त्रं पूरयत ।**

## पौषरविवार पूजाको सामग्री

सामान्य पूजासामग्री भाग १, दियो, कलश, गणेश, अर्घ, पञ्चामृत, सप्तमृत्तिका, पञ्चपल्लव, सर्वौषधी, सूर्यको सुनको प्रतिमा, बाह्रदल भएको तामाको थाली, रातो करवीरको फूल, रक्तचन्दन, धूप, बत्ती, कपूर, फलफूल, दक्षिणा आदि ।

### (झ) पौषार्कव्रतप्रतिष्ठा

**अथ पौषार्कव्रतप्रतिष्ठाविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि स्वर्णनिर्मितरविप्रतिमां संस्थाप्य तद्विधिना (पौषार्कपूजाविधिना) सम्पूज्य रात्रौ जागरणं कुर्यात् । प्रातर्देवस्योत्तरपूजां विधाय होमं १०८ कृत्वा प्रार्थयेत् ।

**सूर्याय वै पापविनाशनाय विश्वात्मने सप्ततुरङ्गमाय ।**

**सामग्र्यजुर्वामनिधं विधातर्भवाब्धिपोताय नमः सवित्रे ॥**

**भानो ! भास्कर ! मार्तण्ड ! चण्डरश्मे ! दिवाकर ! ।**

**आरोग्यमायुर्विजयं विद्यां देहि नमोऽस्तु ते ॥**

धान्यगोधूमगुडलवणादिदानम् ।

सम्भवेसति शय्यां दत्वा । पूर्णपात्रदानम् ।

प्रतिमादानम्

ॐ अद्येत्यादि अमुकशर्मा मम एतावत्कालकृतस्य पौषार्कव्रतस्य यथोक्तफलावाप्तये उद्यापनाङ्गत्वेन सुपूजितां सोपस्करां सूर्यप्रतिमां सूर्यप्रीतये यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

प्रार्थना

**भानो ! प्रसीद देवेश ! सर्वलोकनमस्कृत ।**

**तव मूर्तिप्रदानेन व्रतं सम्पूर्णमस्तु मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत् संपूजित-सोपस्कर-सुवर्णनिर्मित-भास्करप्रतिमादानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोदानम्

अद्य मम एतावत्कालकृतस्य पौषार्कव्रतस्य यथोक्तफलावाप्तये उद्यापनकर्मणः प्रतिष्ठासाङ्गता सिद्धये न्यूनातिरिक्तपरिपूर्णार्थमिमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतं द्रव्यं अमुकदैवतं यथानामगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा कृतैतदित्यादि ॥

*॥ इति पौषार्क-व्रतप्रतिष्ठा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| स्थाल्युपरि | = | थालीको माथि |
| रविप्रतिमाम् | = | सूर्यको चित्र अङ्कित प्रतिमा (१२ दल कमल भएको) |
| गोदानम् | = | गाईदान |

## अभ्यासार्थाः प्रश्नाः

१. **पौषार्कव्रतप्रतिष्ठाया विशेषकार्याणि कानि ?**

२. **"सूर्याय वै पाप विनाशनाय" इति मन्त्रं लिखत ।**

३. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

४. **पौषार्कव्रतप्रतिष्ठायाः गोदानप्रयोगं प्रदर्शयत ।**

## पौषार्क–व्रतप्रतिष्ठाको सामग्री

सामान्य व्रतप्रतिष्ठाको सामग्री, पौषार्क पूजाविधिको सामग्री, १२ दल कमल भएको सूर्यको प्रतिमा, वस्त्र, गहुँ, धान, नुन, काँस, तिल, रातो करवीरको फूल र पात, दुबो, नैवेद्य, शय्याको सामान, दक्षिणा आदि ।

### (ञ) पौर्णमासीव्रतप्रतिष्ठा

**अथ पौर्णमासीव्रतप्रतिष्ठाविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि रौप्यनिर्मित-चन्द्रप्रतिमां तत्पूजाविधिना (पौर्णमासी पूजाविधिना) संपूज्य रात्रौ जागरणं कुर्यात् । प्रातश्चन्द्रस्योत्तरपूजां विधाय **इमन्देवेति** मन्त्रेण १०८ होमं कृत्वा प्रार्थयेत् ।

प्रार्थना

**नमस्तेऽस्तु निशानाथ ! रोहिण्याः प्रियवल्लभ !**

**नमस्ते हरभूषाय कलाषोडशधारिणे ॥**

**रोग-मृत्यु-महोत्पातं ग्रहदोषसमुद्भवम् ।**

**तत् सर्वं कुरु नः शान्तिं ताराधिप ! नमोऽस्तु ते ॥**

षोडशब्राह्मणेभ्यः क्षीरपूर्णषोडशरौप्यपात्रदानम् ।

कांस्यपात्रदानम् ॥ सवस्त्रं १६ उदककुम्भदानम् । सम्भवे सति शय्यादानम् ।

पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि मम श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वकचन्द्रप्रीतये कृतस्य पौर्णमासीव्रतस्योद्यापनाङ्गत्वेन सुपूजितां सोपस्करां रौप्यनिर्मितां चन्द्रप्रतिमां चन्द्रप्रीतये यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**चन्द्र ! प्रसीद देवेश ! सर्वलोकवरप्रद ।**

**तव बिम्बप्रदानेन व्रतं सम्पूर्णमस्तु मे ॥**

दानप्रतिष्ठा–

अद्य कृतैतत् संपूजित-रौप्यनिर्मित-सोपस्करचन्द्रबिम्बदानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोदानम्

अद्येत्यादि मम एतावत्कालपर्यन्तं कृतस्य पौर्णमासीव्रतस्य यथोक्तफलावाप्तये कृतैतदुद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्तपरिपूणार्थमिमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतममुकद्रव्यं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थं देवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा अद्यकृतैतदित्यादि ॥

*॥ इति पौर्णमासीव्रतप्रतिष्ठा ॥*

## शब्दार्थाः

रौप्यनिर्मित = चाँदीद्वारा निर्मित

चन्द्रप्रतिमाम् = चन्द्रमाको चित्र अङ्कित प्रतिमा

## अभ्यासार्थाः प्रश्नाः

१. **पौर्णमासीव्रतप्रतिष्ठाया विशेषकार्याणि कानि ?**

२. **"इमन्देवा" इति मन्त्रं लिखत ।**

३. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

४. **पौर्णमासीव्रतप्रतिष्ठायाः गोदानप्रयोगं प्रदर्शयत ।**

## पौर्णमासीव्रतोद्यापको सामग्री

सामान्य व्रतप्रतिष्ठाको सामान, पौर्णमासी–पूजाविधिको सामान, चाँदीको प्रतिमा, चाँदीका १६ ओटा पात्र, दुध, सेतो वस्त्र, दही, पूवा, पेडा, दक्षिणा, शय्याको सामान आदि ।

### (ट) कृष्णाष्टमीव्रतोद्यापनविधिः

**अथ कृष्णाष्टमीव्रतोद्यापनविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च तदुपरि ताम्रस्थालीं स्थाल्युपरि लक्ष्मीयुक्तचतुर्भुजकौस्तुभादिसंयुक्तसुवर्णप्रतिमां संस्थाप्य तत्पूजाविधिना (कृष्णाष्टमीपूजाविधिना) पूजां समाप्य रात्रौ जागरणं कुर्यात् ।

प्रातर्देवस्योत्तरपूजां विधाय तिलाज्ययुक्तपायसेन **मूलमन्त्रेण** १०८ **पुरुषसूक्तेन** च हुत्वा देवं प्रार्थयेत् ।

**नमस्तुभ्यं जगन्नाथ ! देवकीतनय ! प्रभो !**
**वासुदेवात्मजानन्त यशोदानन्दवर्धन ॥**
**गोविन्द गोकुलानन्द ! गोपीकान्त ! नमोऽस्तु ते ।**
**त्राहि मां सर्वपापघ्नदुःखशोकार्णवात् प्रभो ॥**
**सर्वलोकेश्वर ! त्राहि पतितं मां भवार्णवात् ॥**

*॥ इति ॥*

अष्टब्राह्मणेभ्योऽन्नपूर्णकलशाष्टकदानम् । सति सम्भवे शय्यां दत्वा ।

पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि अमुकशर्माऽहं मम सकुटुम्बस्य कृष्णाष्टमीव्रतस्य यथोक्तफलावाप्तये उद्यापनाङ्गत्वेन

सुपूजितां सौवर्णसोपस्करां श्रीकृष्णप्रतिमां श्रीकृष्णप्रीतये यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

प्रार्थना

**अवतारसहस्राणि करोषि मधुसूदन ।**

**अस्य प्रदानात् देवेश ! व्रतं सम्पूर्णमस्तु मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सुपूजितस्वर्णनिर्मितसोपस्करश्रीकृष्णप्रतिमादानकर्मणः प्रतिष्ठासाङ्गता सिद्धये यद्देयं तद्दैवतं यथानामगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोदानम्

अद्येत्यादि अमुकशर्माहं मम कृतस्य कृष्णाष्टमीव्रतस्योद्यापनकर्मणः साङ्गतासिद्धये न्यूनातिरिक्तकर्मपूर्णार्थम् इमां गां रुद्रदैवत्यां तन्निष्क्रयीभूतं द्रव्यं अमुकदैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत् गोदानकर्मणः प्रतिष्ठासाङ्गतासिद्धये इदं द्रव्यम् अमुकदैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । इति ।

*॥ इति कृष्णाष्टम्युद्यापनविधिः ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| लक्ष्मीयुक्त | = | लक्ष्मीले सहित भएको |
| चतुर्भुजकौस्तुभादिसंयुक्तः | = | चार हात, कौस्तुभादिले युक्त भएको विष्णु प्रतिमा |
| तिलाज्ययुक्तः | = | तिल र घिउले युक्त भएको |

## अभ्यासार्थाः प्रश्नाः

१. **"नमस्तुभ्यं जगन्नाथः" इति मन्त्रं पूरयत ।**

२. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

३. **हवनीयं द्रव्यं किम् ?**

४. **कृष्णाष्टमीव्रतोद्यापने विशेषकार्याणि कानि ?**

## कृष्णाष्टमी-व्रतोद्यापनको सामग्री

सामान्य व्रतप्रष्ठिाको सामग्री, कृष्णष्टमी पूजाविधिको सामग्री, लक्ष्मीसहित विष्णुको प्रतिमा, अन्न-द्रव्यसहित गाग्रो, हवनलाई खिर, सौभाग्यको सामान, द्रव्य, शय्याको सामग्री र दक्षिणा आदि ।

### (ठ) स्वस्थानीव्रतप्रतिष्ठा

**अथ स्वस्थानीव्रतप्रतिष्ठाविधिः**

सर्वोद्यापनविधौ सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि सुवर्णप्रतिमां तत्पूजाविधिना (श्रीस्वस्थानी–पूजाविधिना) सम्पूज्य रात्रौ जागरणं कुर्यात् । प्रातर्देव्याउत्तर पूजां विधाय । ॐ **देवीद्वारिण** होमः १०८ ।

प्रार्थना

**नमोऽस्तु ते महादेवि स्वस्थानि परमेश्वरि ।**
**त्रिलोकजननि नित्ये प्राणिनां पापहारिणि ॥**
**त्रिपुरघ्न महादेव भक्तवत्सल विश्वकृत् ॥**
**नमस्करोमि देवेश ब्रह्ममाधववन्दित ॥**
**अन्यत्र शरणं नास्ति युवां वै शरणं मम ।**
**तस्मात्कारुण्यभावेन रक्षेतां परमेश्वरौ ॥**

शष्कुलीताम्बूलपूगीफलनानापुष्पाणां दानम् ।

पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वक श्रीस्वस्थानीप्रीतये एतावत्कालपर्यन्तं कृतस्य स्वस्थानीव्रतस्योद्यापनाङ्गत्वेन सुपूजितां स्वर्णप्रतिमां श्रीस्वस्थानी प्रीतये अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**ॐ नमस्तेऽस्तु जगन्मातःस्वस्थानि ! सर्वमङ्गले ।**
**तव प्रासादाद्देवेशि व्रतपूर्णं भवेन्मम ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सुपूजितस्वस्थानीप्रतिमादानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोदानम्

अद्येत्यादि ममैतावत्कालकृतस्य स्वस्थानीव्रतस्योद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्तपरिपूर्णार्थं श्रीस्वस्थानि प्रीतये इमां गां रुद्रदैवत्यां तन्निष्क्रयं यद्द्रव्यं तद्दैवतम् अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सालङ्कारगोदानप्रतिष्ठा साङ्गतासिद्धये इदं रजतं चन्द्रदैवतममुकगोत्राय तुभ्यमहं सम्प्रददे ।

*॥ इति श्रीस्वस्थानीव्रतप्रतिष्ठा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| ताम्बूलम् | = | पान |
| पुगीफलम् | = | सुपारी |
| शस्कुली | = | सेल रोटी |

## अभ्यासार्थाः प्रश्नाः

१. **“देवीर्द्वार” इति मन्त्रं पूरयत ।**

२. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

३. **स्वस्थानीव्रतप्रतिष्ठायाः विशेषकार्याणिः कानि ?**

४. **गोदानस्य प्रयोगं प्रदर्शयत ।**

## स्वस्थानीव्रतप्रतिष्ठाको सामग्री

सामान्य व्रतप्रतिष्ठाको सामान, स्वस्थानी पूजाविधिको सामान, स्वस्थानी कथाको पुस्तक, सुनको स्वस्थानीको प्रतिमा, सुनको आर्शी, नैवेद्य, पान, सुपारी, जौ, तिल, अक्षता, सूत्र, बेली, कन्दपुष्प, दक्षिणा सबै १०८ का दरले र सबै किसिमका फूल १०८ का दरले आदि ।

### (ङ) शिवरात्रिव्रतप्रतिष्ठा

**अथ शिवरात्रिव्रतप्रतिष्ठाविधिः**

सर्वतोभद्रमण्डलैकदेशे कलशं संस्थाप्य सम्पूज्य च तदुपरि ताम्रस्थालीं निधाय स्थाल्युपरि

वृषभस्थितामुमामहेश्वरमूर्तिं तद्विधिना (शिवरात्रि–पूजाविधिना) संम्पूज्य रात्रौ जागरणं कुर्यात् । प्रातर्देवस्योत्तर पूजां विधाय पायसतिलैः **“नमः शम्भवाय”** इति **“अम्बेऽअम्बिके”** इति मन्त्राभ्यां १०८ होमः । बिल्वपत्रतिलब्रीह्यादिभिरजैकपदादि १४ नाममन्त्रैर्होमः ।

प्रार्थनामन्त्रः

**नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने ।**
**नन्दिभृङ्गिमहाकालगणयुक्ताय शम्भवे ॥**
**शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे ॥**
**शिवायै सर्वमाङ्गल्यै शिवरूपे जगन्मये ॥**
**संसारभयसन्तापात् त्राहि मां सिंहवाहिनि ॥**
**येन कामेन देवेशि पूजितासि महेश्वरि ॥**
**राज्यसौभाग्यसम्पत्तिं देहि मामम्ब पार्वति ॥**

चतुर्दशब्राह्मणेभ्यो यज्ञोपवीतजलपूर्णं १४ घटदानम् ।

सम्भवे सति शय्यादानम् ।

पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि मम श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वकउमामहेश्वरप्रीतये एतावत्कालपर्यन्तं कृतस्य शिवरात्रिव्रतस्योद्यापनाङ्गत्वेन सुपूजितां स्वर्णनिर्मितां सोपस्कराम् उमामहेश्वरप्रतिमां ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**शम्भो ! प्रसीद देवेश ! सर्वलोकेश्वर प्रभो ।**
**तव रूपप्रदानेन प्रसन्नास्तु मनोरथाः ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सोपस्करसुपूजितउमामहेश्वरप्रतिमादानकर्मणः प्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥

गोदानम्

अद्येत्यादि ममैतावत्कालकृतस्य शिवरात्रिव्रतस्योद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्त-परिपूर्णार्थं श्रीसदाशिवप्रीतये इमां गां रुद्रदैवत्यां तन्निष्क्रयं यद्द्रव्यं तद्दैवतम् अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा

अद्य कृतैतत्सालङ्कारगोदानप्रतिष्ठासाङ्गतासिद्धये इदं रजतं चन्द्रदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

*॥ इति शिवरात्रिव्रतप्रतिष्ठा ॥*

## शब्दार्थाः

वृषभस्थिताम् = साँढेमाथि चढेका

उमामहेश्वरमूर्तिम् = उमामहेश्वरको चित्राङ्कित प्रतिमा

## अभ्यासार्थाः प्रश्नाः

१. **शिवरात्रीव्रतप्रतिष्ठाया विशेषकार्याणि कानि ?**

२. **हवनीयं द्रव्यं किम् ?**

३. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**

४. **गोदानप्रयोगं प्रदर्शयत ।**

५. **प्रतिमायाः प्रार्थनामन्त्रं लिखत ।**

## शिवरात्री व्रतप्रतिष्ठाको सामग्री

सामान्य व्रतप्रतिष्ठाको सम्पूर्ण सामग्री, शिवरात्री पूजाविधिको सामग्री, साँढे सहितको उमामहेश्वरको चित्र अङ्कित सुनको प्रतिमा, फलफूल, माला, नैवेद्य, शय्याको सामग्री, दक्षिणा, तामाका घडा-१४, र अन्य सामग्रीहरू आदि ।

### (ढ) सोद्यापनं सोमवत्यमावास्याव्रतम्

**अथ सोद्यापनं सोमवत्यमावास्याव्रतविधिः**

शङ्खः

**अमासोमसमायोगो यत्र यत्र हि लभ्यते ।**

**तीर्थे कपिलधारं च गङ्गां च पुष्करं तथा ॥**

**दिव्यान्तरिक्षभौमानि यानि तीर्थानि सर्वशः ।**

**तानि तत्र वसिष्यन्ति दर्शे सोमदिनान्विते ॥**

**अमावस्या तु सोमेन सप्तमी भानुना सह ।**

**चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥**

**चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभा ।**

**स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् ॥**

**तिथिर्वासरयोर्योगो यथाकाले भवेद्यदि ।**

**भान्वन्तेऽवाथ मध्याह्ने पुण्यकालः स नान्यथा ॥**

अत्रैवाश्वत्थमूले विष्णुपूजनम् ।

व्रतराजस्य पूर्णता सिद्धये उद्यापनमावश्यकम् ।

अतः सर्वतोभद्रं निर्माय तन्मध्ये कलशं संस्थाप्य सुवर्णस्य वृक्षराजं पञ्चरत्नस्य वेदिकां च निर्माय लक्ष्मीनारायणस्य सौवर्णीं प्रतिमां संस्थाप्य अनेकैरुपचारैः पूजयेत् । रात्रौ जागरणं कृत्वा प्रभाते पैप्पलीभिः समिद्भिः पायसेन तिलैश्च इदं विष्णुरिति मन्त्रेण हुत्वा पूर्णाहुतिं चरेत् । पश्चादाचार्यं पयस्विनीं गां च संपूज्य दद्यात् । द्वादश ऋत्विजो वस्त्राद्यैः संपूज्य तेभ्यो दक्षिणां दद्यात् । ततः भूमौ दण्डवत्प्रणम्य प्रार्थयित्वा च विसर्जयेत् ।

**एवं द्वादशवर्षे वा मध्ये वादौ समाचरेत् ।**

**कृत्वा ह्युद्यापनं सम्यग्व्रतराजफलं लभेत् ॥**

*॥ इति ॥*

तत्र सङ्कल्पः

तिथ्यादि सङ्कीर्त्य अस्यां सोमवत्यमायां सकलपापक्षयार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं जन्मजन्मन्यवैधव्यसन्ततिचिरजीवितपरमसौभाग्यप्राप्तिकामोऽहमश्वत्थमूले लक्ष्मीसहितविष्णुपूजां तदङ्गतया विहितमश्वत्थपूजनं दीपकलशगणेशादीनां पूजनमुद्यापनं च करिष्ये । इति सङ्कल्प्य दीपादीन् संपूज्य अश्वत्थमुदकसेचनपूर्वकं सूत्रेण वेष्टयित्वा तन्मूले विष्णुं पूजयेत् ।

तत्रादौ शान्ताकारमिति ध्यानम् ।

आवाहनम्

**ॐ सहस्रशीर्षा पुरुषः ... ॥**

**विश्वव्यापक विश्वेश कृपया दीनवत्सल ।**

**मयोपपादितां पूजां गृहाणेमां हि माधव ॥**

आसनम्

**ॐ पुरुषएवेदम् ... ॥**

**सूर्यकोटिप्रभानाथ सर्वव्यापिन् रमापते ।**

**आसनं कल्पितं भक्त्या गृहाण पुरुषोत्तम ॥**

पाद्यम्

**ॐ एतावानस्य ... ॥**

**नारायण जगद्व्यापिञ्जगदानन्दकारक ॥**

**विष्णुक्रान्तादिसंयुक्तं गृह्ण पाद्यं मयार्पितम् ॥**

अर्घ्यम्

**ॐ त्रिपादूर्ध्व ... ॥**

**फलगन्धाक्षतैर्युक्तं पुष्पपूगसमन्वितम् ।**

**अर्घ्यं गृहाण भगवन् विष्णो सर्वफलप्रद ॥**

आचमनीयम्

**ॐ ततो विराड ... ॥**

**कर्पूरैलालवङ्गाढ्यं शीतलं सलिलं प्रभो ।**

**रमारमणकृष्णत्वमाचाम्यं प्रतिगृहचताम् ॥**

पञ्चामृतम्

**ॐ पञ्चनद्य ... ॥**

**पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।**

**शर्करागुडसंयुक्तं स्नानार्थं प्रतिगृह्यताम् ॥**

स्नानम्

**ॐ तस्माद्यज्ञात् ... ॥**

**गङ्गा कृष्णा गौतमी च कावेरी च शतह्रदा ।**

**ताभ्य आनीतमुदकं स्नानार्थं प्रतिगृह्यताम् ॥**

वस्त्रम्

**ॐ तस्मा द्यज्ञात् सर्वहुत ऋच ... ॥**

**पीतवासस्त्वयि विभो मया यत्समुपाहृतम् ।**

**वासः प्रीत्या गृहाणेदं पुरुषोत्तम केशव ॥**

उपवीतम्

**ॐ तस्मादश्वा ... ॥**

**उपवीतं सोत्तरीयं मया दत्तं सुशोभनम् ।**

**विश्वमूर्ते गृहाणेदं नारायण जगत्पते ॥**

गन्धम्

**तं यज्ञम् ... ॥**

**मलयाचलसंभूतं घनसारं मनोहरम् ।**

**विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥**

अक्षतान्

**ॐ अक्षन्नमीमदन्त ... ॥**

**अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ।**

**मया निवेदिता भक्त्या गृहाण परमेश्वर ॥**

पुष्पाणि

**ॐ श्रीश्चते लक्ष्मीश्च... ॥**

**तुलसीजातिकमलमल्लिकाचम्पकानि च ।**

**पुष्पाणि हर गोविन्द गृहाण परमेश्वर ॥**

अलङ्कारान्

**ॐ अहिरिव भोगै... ॥**

**भूषणानि महार्हाणि मुक्ताहारयुतानि च ।**

**ददामि हर मे पापं नारायण नमोऽस्तु ते ॥**

धूपः

**ॐ ब्राह्मणोऽस्य... ॥**

**वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

दीपः

**ॐ चन्द्रमा मनसो... ॥**

**चक्षुर्दं सर्वदेवानां तिमिरस्य निवारणम् ।**

**आर्तिक्यं कल्पितं भक्त्या गृहाण जगदीश्वर ॥**

नैवेद्यम्

**ॐ नाभ्या आसीत्... ॥**

**भक्ष्यभोज्यलेह्यपेय्यचोष्यखाद्यं मयाहृतम् ।**

**प्रीतये परमेशस्य दत्तं मे स्वीकुरु प्रभो ॥**

धेनुमुद्रां च प्रदर्श्य मध्ये पानीयम् । उत्तरापोशनम् ।

फलम्

**ॐ याः फलिनी ... ॥**

**फलानि रसयुक्तानि ऋतुकालोद्भवानि च ।**

**निवेदितानि देवेश गृहाण पुरुषोत्तम ॥**

पूगीफलमिति ताम्बूलम् । हिरण्यगर्भेति दक्षिणाम् ।

नीराजनम्

**ॐ अग्निर्ज्योतिर्ज्योतिरग्नि... ॥**

**त्वद्भासा भासते लोकः कोटिसूर्यसमप्रभ ।**

**नीराजयिष्ये त्वां विष्णो कृपां कुरु मम प्रभो ॥**

प्रदक्षिणा

**ॐ सप्तास्या ... ॥**

**मया कायेन मनसा वाचा जन्मशतार्जितम् ।**

**पापं प्रशमय श्रीश प्रदक्षिणपदेपदे ॥**

नमस्कारः

**व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यन्तकारिणे ।**

**आदिमध्यान्तरहितविष्टरश्रवसे नमः ॥**

पुष्पाञ्जलिः

**ॐ यज्ञेन यज्ञमय ... ॥**

**आदिमध्यान्तरहित भक्तानामिष्टदायक ।**

**पुष्पाञ्जलिं मया दत्तं गृहाण सुरपूजित ॥**

ततः **अमायै नमः** । **सोमायै नमः** ।

इति नाममन्त्राभ्याममासोमयोः पूजेति शिष्टाचारः ।

ततः

**अश्वत्थहुतभुग्वास गोविन्दस्य सदाप्रिय ।**

**अशेषं हर मे पापं वृक्षराज नमोऽस्तु ते ॥**

इति मन्त्रेणाश्वत्थं संपूजयेत् ।

**अमासोमव्रतस्यास्य संपूर्णफलहेतवे ।**

**वायनं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥**

इति मन्त्रेण वायनं दत्वा प्रार्थयेत् ।

प्रार्थनामन्त्रः

**यन्मया मनसा वाचा नियमात्पूजनं कृतम् ।**

**सर्वं सम्पूर्णतां यातु तद्विष्णोश्च प्रसादतः ॥**

**ततः**

**मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।**

**अग्रतः शिवरूपाय अश्वत्थाय नमो नमः ॥**

इति मन्त्रेण प्रतिप्रदक्षिणमेकैकफलाद्यर्पणपूर्वकमष्टोत्तरशतं (१०८) प्रदक्षिणाः कार्याः ।

एवं पूजां समाप्य रात्रौ जागरणम् । प्रातर्देवस्योत्तरपूजां विधाय **इदं विष्णुरिति** मन्त्रेण अश्वत्थसमिद्भिः पायसतिलैश्च १०८ हुत्वा प्रार्थयेत् ।

प्रार्थना

**नारायणाय देवाय हरये परमात्मने ।**

**शरण्यायाप्रमेयाय गोविन्दाय नमो नमः ॥**

**देवदेवाय वन्द्याय पराय परमेष्ठिने ।**

**कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते नमः ॥**

द्वादशब्राह्मणेभ्यो यज्ञोपवीतवस्त्रपायसभोजनदानम् ।

पूर्णपात्रदानम् ।

प्रतिमादानम्

अद्येत्यादि अमुकदेव्यहं मम सकलपापक्षयपूर्वक पुत्रपौत्राद्यभिवृद्धये सुपूजितां सोपस्करां स्वर्णनिर्मितलक्ष्मी–नारायणप्रतिमां श्रीलक्ष्मीनारायणप्रीतये यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**हरे ! प्रसीद देवेश ! सर्वलोकवरप्रद ।**

**तव मूर्तिप्रदादेन मम सन्तु मनोरथाः ॥**

दानप्रतिष्ठा

अद्य कृतैतत् सोपस्करसुपूजितस्वर्णनिर्मितश्रीलक्ष्मीनारायणप्रतिमादानप्रतिष्ठासाङ्गतासिद्धये यद्देयं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोदानम्

अद्येत्यादि अमुकदेव्यहं मया कृतस्य सोमवतीव्रतस्य यथोक्तफलावाप्तये उद्यापनकर्मणः प्रतिष्ठासाङ्गतासिद्धये न्यूनातिरिक्तपरिपूरणार्थमिमां गां रुद्रदैवत्यां तन्निष्क्रयद्रव्यं तद्दैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थ देवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

**दानप्रतिष्ठा** अद्य कृतैतदित्यादि ॥

*॥ इति सोमवती–व्रतप्रतिष्ठा ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| संस्थाप्य | = | राखेर |
| अश्वत्थसमिद्भिः | = | पीपलको समिधाले |
| लक्ष्मीनारायणप्रतिमाम् | = | लक्ष्मी नारायणको चित्राङ्कित प्रतिमा । |

## अभ्यासार्थाः प्रश्नाः

१. **सोमवतीव्रतप्रतिष्ठायाः विशेषकार्याणि कानि ?**
२. **"इदं विष्णु.." इति मन्त्रं पूरयत ।**
३. **हवनीयं द्रव्यं किम् ?**
४. **प्रतिमादानस्य सङ्कल्पवाक्यं लिखत ।**
५. **सोमव्रतीव्रतप्रतिष्ठायाः गोदानप्रयोगं प्रदर्शयत ।**

## सोमवतीव्रतप्रतिष्ठाको सामग्री

सामान्य व्रतप्रतिष्ठाको सामग्री, सोमवती पूजाविधिको सामग्री, लक्ष्मी नारायणको चित्राङ्कित सुनको प्रतिमा, फलफूल, माला, नैवेद्य, दक्षिणा र शय्याको सामग्री आदि ।

### (ण) सोद्यापनं प्रदोषव्रतम् (तत्र शनिप्रदोषव्रतपूजाविधिः)

**कार्तिके श्रावणे प्राप्ते मन्दवारे त्रयोदशी ।**

**सम्पूर्णा तु भवेद्या सा समग्रव्रतसिद्धये ॥**

**वृषभो राजतः कार्यः पृष्ठे तस्य सुपीठकम् ।**

**तस्योपरि न्यसेदेवमुमाकान्तं त्रिलोचनम् ॥**

**पञ्चवक्त्रं दशभुजमर्धाङ्गे गिरिजां सतीम् ।**

**सौवर्णीं प्रतिमां कृत्वा ताम्रकुम्भं जलैर्युतम् ॥**

**पञ्चरत्नफलोपेतं पञ्चपल्लवशोभितम् ।**

**चन्दनेन सुगन्धेन मिश्रितं शोभितं तथा ॥**

**रौप्यपात्रं ततः कृत्वा कुम्भस्योपरि विन्यसेत् ।**

**अशक्तो मृण्मयं कुम्भं वंशपात्रमथापि वा ॥**

**पूर्णं शरावं संस्थाप्य सौवर्णीं प्रतिमां तथा ।**

**शक्त्या कृतां प्रतिष्ठाप्य वस्त्रमाल्यविभूषणैः ॥**

**पूजयित्वा विधानेन रात्रौ जागरणं चरेत् ।**

**पुष्पमण्डपिकामादौ कृत्वा श्रद्धासमन्वितः ॥**

**आवाहयेत्प्रथमतो मन्त्रेणानेन सुव्रत ॥**

प्रदोषव्रतोद्यापनेऽपि पूर्ववत् सर्वतो भद्रमण्डलं वा लिङ्गतोभद्रमण्डलं विधाय पूजा कार्या ।

तत्र रजतं वृषभं सौवर्णी उमामहेश्वरप्रतिमा ताम्रं कलशं तस्योपरि रौप्यपात्रं ताम्रपात्रं वा तदुपरि उमामहेश्वरं संस्थाप्य पूजयेत् । तत्रादौ आचम्यप्राणानायम्य बद्धशिखी ललाटे तिलकं कृत्वा सङ्कल्पं कुर्यात् ।

अद्येहेत्यादि मासपक्षादीन् समुच्चार्य अद्येहामुकगोत्रामुकप्रवरामुकशर्माहं मम जन्मनि जन्मान्तरे वा विहितस्य सकलपापक्षयपूर्वकश्रीपरमेश्वरप्रीत्यर्थं प्रदोषव्रताङ्गत्वेन तदुद्यापनाङ्गत्वेन वा दीपकलश-गणेशपूजनपूर्वकमुमामहेश्वरपूजनमहङ्करिष्ये ।

इति सङ्कल्प्य पूजाविधिना दीपादीन् संपूज्य अधोनिर्दिष्टपूजाविधिना उमामहेश्वरं पूजयेत् ।

आवाहनम्

**एह्येहि त्वमुमाकान्त स्थाने चात्र स्थिरो भव ॥**

**यावद्व्रतं समाप्येत कृपया दीनवत्सल ॥**

आसनम्

**आसनेऽस्मिन्नुमाकान्त सुखस्पर्शे सुनिर्मले ॥**

**उपविश्य मृडेदानीं सर्वशान्तिप्रदो भव ॥**

पाद्यम्

**पाद्यं च ते मयादत्तं पुष्पगन्धसमन्वितम् ।**

**गृहाण देवदेवेश प्रसन्नो वरदो भव ॥**

अर्घ्यम्

**ताम्रपात्रस्थितं तोयं फलगन्धादिसंयुतम् ।**

**अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः ॥**

आचमनीयम्

**शीतलं निर्मलं तोयं कर्पूरेण सुवासितम् ।**

**आचम्यतां सुरश्रेष्ठ मया दत्तं हि भक्तितः ॥**

पञ्चामृतस्नानम्

पञ्चामृतेन स्नपनं मन्त्रपूर्वकं कारयेत् ।

दुग्धस्नानम्

**गोक्षीरधामदेवेश गोक्षीरेण मया कृतम् ।**

**स्नपनं देवदेवश गृहाण परमेश्वर ॥**

दधिस्नानम्

**दध्ना चैव मया देव स्नपनं क्रियते तव ।**

**गृहाण भक्त्या दत्तं मे सुप्रसन्नो भवाव्यय ॥**

घृतस्नानम्

**सर्पिषा देवदेवेश स्नपनं क्रियते मया ।**

**उमाकान्त गृहाणेदं श्रद्धया सुरसत्तम ॥**

मधुस्नानम्

**इदं मधु मया दत्तं तव तुष्ट्यर्थमेव च ।**

**गृहाण शम्भो त्वं भक्त्या मम शान्तिप्रदो भव ॥**

शर्करास्नानम्

**सितया देवदेवेश स्नपनं क्रियेत मया ।**

**गृहाण शम्भो मे भक्त्या सुप्रसन्नो भव प्रभो ॥**

स्नानम्

**कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती ।**

**गङ्गा च यमुना चैव ताभ्यः स्नानार्थमाहृतम् ॥**

**गृहाण त्वमुमाकान्त स्नानाय श्रद्धया जलम् ।**

वस्त्रम्

**एतद्वासो मया दत्तं सोत्तरीयं सुशोभनम् ।**

**गृहाण त्वं सुरश्रेष्ठ मम वासः प्रदो भव ॥**

यज्ञोपवीतम्

**यज्ञोपवीतं सौवर्णं मया दत्तं च शङ्कर ।**

**गृहाण परया तुष्ट्या पुष्टिदो भव सर्वदा ॥**

चन्दनम्

**सुगन्धं चन्दनं दिव्यं मया दत्तं तव प्रभो ।**

**भक्त्या परमया शम्भो सुभगं कुरु मां भव ॥**

पुष्पम्

**मालती चम्पकादीनि कुमुदान्युत्पलानि च ।**

**बिल्वपत्राणि पूजार्थं स्वीकुरु त्वमुमापते ॥**

धूपः

**धूपं विशिष्टं परमं सर्वौषधिविजृम्भितम् ।**

**गृहाण परमेशान ममोपरि दयां कुरु ॥**

दीपः

**दीपं च परमं शम्भो घृतवर्तिसुयोजितम् ।**

**दत्तं गृहाण देवेश मम ज्ञानप्रदो भव ॥**

नैवेद्यम्

**शाल्योदनं घृतयुतं पायसादिसमन्वितम् ।**

**नैवेद्यं विविधं दत्तं भक्त्या मे प्रतिगृह्यताम् ॥**

मध्ये पानीयम्

**नैवेद्यमध्ये पानीयं मया दत्तं हि भक्तितः ।**

**स्वीकुरुष्व महादेव प्रसन्नो भव सर्वदा ॥**

उत्तरापोशनम्

**उत्तरापोशनार्थं वा आनीतं जलमुत्तमम् ।**

**गृहाण त्वमुमाकान्त सर्वदुःखनिवारक ॥**

ताम्बूलम्

**कर्पूरैलालवङ्गादिपूगीफल समन्वितम् ।**

**ताम्बूलं कल्पितं भक्त्या गृहाण गिरिजाप्रिय ॥**

फलम्

**इदं फलं मया देव स्थापितं पुरतस्तव ।**

**तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥**

दक्षिणा

**हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**दक्षिणा काञ्चनी देव स्थापिता मे तवाग्रतः ॥**

आरार्तिक्यम्

**दीपावली मया दत्ता सुवर्तिघृतसंयुता ।**

**आरार्तिकप्रदानेन मम तेजः प्रदो भव ॥**

प्रदक्षिणा

**यानि कानि च पापानि... ॥**

नमस्कारः

**मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।**

**अमृतेशाय शर्वाय महादेवाय ते नमः ॥**

मन्त्रपुष्पम्

**सेवन्तिकाबकुलचम्पकपाटलाब्जैः**

**पुन्नागजातिकरवीररसालपुष्पैः ।**

**बिल्वप्रवालतुलसीदलमालतीभि-**

**स्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥**

**निपत्य दण्डवद्भूमौ प्रणम्य च पुनः पुनः ।**

**क्षमापयित्वा देवेशं रात्रौ जागरणं चरेत् ॥**

**गीतवादित्रनृत्याद्यैर्गृहे वा देवतालये ।**

**वितानमण्डपं कुर्यान्नानावर्णैः समन्वितम् ॥**

(अयं मण्डपो होमार्थः)

**प्रभातायां तु शर्वर्यां नद्यादौ विमले जले ।**

**स्नात्वा पुनः समभ्यर्च्य जुहुयात्पायसेन च ॥**

**उमया सहितं रुद्रं पृथगष्टोत्तरं हुनेत् ।**

**गौरीर्मिमाय मन्त्रेण त्र्यम्बकेण च शङ्करम् ॥**

**आचार्यं च सपत्नीकं वस्त्रालङ्कारचन्दनैः ।**

**तोषयित्वा शुचिं दान्तं गां दद्याच्च पयस्विनीम् ।**

**ब्राह्मणान्भोजयेत् पश्चाद्दक्षिणाभिः प्रतोषयेत् ।**

**दीनानाथांश्च संतर्प्य ह्यच्छिद्रं वाचयेत्ततः ॥**

**लब्धानुज्ञां ब्राह्मणेभ्यो बन्धुभिः सहितः शुचिः ।**

**हृदिं स्मरञ्छिवं भक्त्या भुञ्जीत नियतो व्रती ॥**

**अनेनैव विधानेन कुर्यादुद्यापने विधिम् ।**

**एवं यः कुरुते भक्त्या प्रदोषव्रतमुत्तमम् ॥**

**शनिवारेण संयुक्तं सोद्यापनविधिं नरः ।**

**आयुरारोग्यमैश्वर्यपुत्रपौत्रसमन्वितः ॥**

**शत्रून् विजयते नित्यं प्रसादाच्छङ्करस्य च ।**

प्रकारान्तरं मदनरत्ने स्कान्दे च ।

केन विधानेनोत्तमम् प्रदोषव्रतम् नरैः स्त्रीभिश्च विधातव्यमिति पार्वत्या पृष्टः शङ्करोऽकथयत् यत् ।

**यदा त्रयोदशी शुक्ला मन्दवारेण संयुता ।**

**आरधव्यं व्रतं तत्र सन्तानफलसिद्धये ॥**

**ऋणनिर्मोचनार्थाय भौमवारेण संयुता ।**

**सौभाग्यस्त्रीसमृद्धयर्थं शुक्रवारेण संयुता ।**

**आयुरारोग्यसिद्धयर्थं भानुवारेण संयुता ।**

**एकवत्सरपर्यन्तं प्रतिपक्षं त्रयोदशी ॥**

**प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शङ्कर ।**

**प्रातश्चानेन मन्त्रेण व्रतसङ्कल्पमाचरेत् ॥**

**ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती ।**

**पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत् ॥**

**पूजामन्त्राः**

**ॐ भवाय नमः । ॐ महादेवाय नमः । ॐ रुद्राय नमः । ॐ नीलकण्ठाय नमः ।**

**ॐ शशिमौलिने नमः । ॐ उग्राय नमः । ॐ उमाकान्ताय नमः ।**

**ॐ ईशानाय नमः । ॐ विश्वेश्वराय नमः । ॐ त्र्यम्बकाय नमः ।**

**ॐ त्रिपुरुषाय नमः । ॐ त्रिपुरान्तकाय नमः । ॐ त्रिकाग्निकाय नमः ।**

**ॐ कालाग्निरुद्राय नमः । ॐ नीलकण्ठाय नमः । ॐ सर्वेश्वराय नमः ।**

ततः पञ्चामृतेन स्नपनम् । एभिर्मन्त्रैः प्रपूज्य दधिभक्तादि नैवेद्यं ताम्बूलं दक्षिणादिकं च दद्यात् ।

एवं त्रयोदशीव्रतं संवत्सरम् (वर्षदिनपर्यन्तम्) कुर्यात् । अथवा मन्दवारेण युक्तां त्रयोदश्यामारभ्य चतुर्विंशतिं यावत् तावत् कुर्यादिति ।

*॥ इति ॥*

## शब्दार्थाः

| | | |
|---|---|---|
| रजतः | = | चाँदीको |
| वृषभः | = | साँडे |
| सौवर्णीम् | = | सुनको, सुवर्णमय |
| रौप्यम् | = | चाँदी |
| मृडः | = | शिव |
| सर्पिः | = | घिउ |
| जुहुयात् | = | हवन गरोस् |
| दीनः | = | दुःखी, गरीब |
| अनाथः | = | आश्रयरहित |
| प्रतोषयेत् | = | खुसी गराओस् |
| भुञ्जीत | = | भोजन गरोस् |

## अभ्यासार्थाः प्रश्नाः

**१. त्रयोदशीव्रतम्, प्रदोषव्रतं वा कदाऽऽरभ्य कतिवर्षपर्यन्तं कर्तव्यम् ?**

**२. अस्यां पूजायां कस्य विशेषपूजा भवति ?**

**३. सर्वतोभद्रनिर्माणप्रकारं वर्णयत ।**

**४. अस्यां पूजायाम् विशेषोपकल्पनीयानि वस्तूनि कानि ?**

## (त) सर्वव्रतप्रतिष्ठान्ते (उत्तराङ्गकर्म)

**अथ सर्वव्रतप्रतिष्ठादिविधिः**

सर्वप्रतिमादानादिकं निर्वर्त्य अग्निसमीपं गत्वा उत्तराङ्गकर्म कुर्यात् ।

मेधाकरणम् ।

पूर्णपात्रदानम् ।

प्रणीताविमोकादिकर्मशेषं समाप्य यज्ञान्तगोदानं कुर्यात् ।

अद्येत्यादि तिथ्याद्युल्लेखनान्ते मया एतावत्कालपर्यन्तकृतानामेकादश्यादिव्रतानां

यथोक्तफलावाप्तये उद्यापनाङ्गत्वेन तत्तद्देवतानामावाहनस्थापनपूजनपूर्वकतत्तद्देवतानां तत्तद्वस्तुभिर्हवनकर्मणः तत्तद्देवताप्रतिमादानकर्मणः द्विजदम्पतिपूजन–शय्यादानादिकर्मणश्च यथोक्तफलावाप्तये न्यूनातिरिक्तपरिपूर्णार्थमिमां गां रुद्रदैवत्यां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना

**कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**

**तीर्थदेवमयी यस्मात्ततः शान्तिं प्रयच्छ मे ॥**

दक्षिणादानम् ।

दक्षिणाद्रव्यं सम्पूज्यादाय

तिथ्याद्युल्लेखनान्ते अमुकगोत्रोऽमुकप्रवरोऽमुकशर्मा सपत्नीकोऽहं मया यथाकालमारभ्यैतावत्कालपर्यन्तं कृतानामेकादश्यादिव्रतानां यथासादितसामग्रिणा तत्तद्देवतानाम् आवाहन–पूजन–हवनादिकर्मणस्तथा तदतद्देवप्रीतये तत्तद्वस्तूनां दानकर्मणः शय्यादिदानकर्मणः करिष्यमाणब्राह्मणभोजनस्य च यथोक्तफलावाप्तये न्यूनातिरिक्तपरिपूरणार्थं श्रुतिस्मृतिपुराणोक्तफलावाप्त्यर्थमिमां दक्षिणां रजतखण्डं चन्द्रदैवतं ताम्रं श्रीसूर्यदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो ब्राह्मणीभ्यः कन्याकुमारेभ्यो दीनानाथेभ्यश्च यथाभागं विभज्य यथाकालेन दातुमहमुत्सृजे तत्सन्न मम ॥

ततः आचार्यादयो ब्राह्मणा देवादीनामुत्तराङ्गपूजां निर्वर्त्य **यान्तु देवेति** विसृज्य ॥ **देवस्य त्वेत्यादि** मन्त्रैर्यजमानस्याभिषेकं कुर्युः ॥ ततो यजमानो ब्राह्मणान् भोजयित्वा स्वयमपि सुहृद्युतो भुञ्जीत ।

*॥ इति व्रतप्रतिष्ठाविधिः ॥*